BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No 1177

# विधानपारिजातः ।

# THE VIDHĀNA-PĀRIJĀTA




EDITED BY

PANDITA TARAPRASANNA VIDYĀRATNA

*Professor, Sanskrit College, Calcutta*

VOL. II FASCICULUS I

CALCUTTA

PRINTED BY ŚAŚIBHŪṢAṆA RATIRATNA BHAṬṬĀCĀRYA

AT THE GIRIŚA VIDYĀRATNA PRESS,

21, GIRIŚA VIDYĀRATNA'S LANE,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET

1907

# विधानपारिजातः।



## तृतीयः स्तवकः।



(प्रथमखण्डात्परम्)

अथ विवाहे उपनयने वा उपक्रान्ते यदि कुमारस्य वधूवरयोर्वा माता रजस्वला तदा विधानमुच्यते।

तथा च शान्तिपटले।

विवाहे व्रतबन्धे च माता यस्य रजस्वला।
मृत्युश्च जडता ज्ञेया क्रमान्मनुजसत्तम।
तत्र शान्तिं प्रवक्ष्यामि सर्व्वेषां हितकारिणीम्॥
यस्मिन् दिने समुत्पन्नं मातुर्दोषकरं रजः।
तस्माद्दिनात्समारभ्य कुर्य्यान्मृत्युञ्जयं* जपम्॥
चतुर्थेऽहनि सम्प्राप्ते पञ्चमे वा समाहितः।

---

* मृत्युञ्जय मृत्युञ्जयमन्त्रः प्रथमखण्डस्य ४०७ पृष्ठे प्रदर्शितम्।

कुर्य्याच्छिवार्चनं विद्वान् पायसेन यथाविधि ॥
मण्डकैः पूरकैश्चापि तण्डुलैः शर्करान्वितैः ।
भक्तेन घृतयुक्तेन पक्वान्नैः पूजयेच्छिवम् ॥
अधस्ताल्लिङ्गतः कार्य्या पूरकैर्मोदकैस्तथा ।
भक्तस्य परिधिं कृत्वा पायसेनार्च्चयेच्छिवम् ॥
दीपान् षोडशसंख्याकानाज्यप्रज्वलितान् शुभान् ।
अर्पयेद्देवदेवाय उपचारैः समन्वितान् ॥
प्राप्ये पूजयसक्तेन* मतूर्य्यो गृहमाविशेत् ।
तत्र स्थण्डिलमाधाय हवनङ्कारयेद्बुधः ॥
अग्निमीळेति मन्त्रेण† जुहुयादयुतं सुधीः ।
पायसेनैव साज्येन स्वगृह्योक्तविधानतः ॥
अर्च्चयेत्सप्तजिह्वस्य सप्तजिह्वा नरेश्वर ।
कराली लोहिता श्वेता महत्पूर्व्वा च लोहिता ।
पीता च पद्मरागा च सुवर्णाख्या तथैव च ॥
लोहिता पूर्व्वतो ज्ञेया महत्पूर्व्वा शचीदिशि ।
सुवर्णाग्निदिशि ज्ञेया पद्मरागा च नैर्ऋते ॥
श्वेता तु वारुणे भागे पीता वायोर्दिशि स्मृता ।
ऐशान्या (दिशि)दिव्या विख्याता या जिह्वा जातवेदसः ॥
सुवर्णा मध्यभागे स्यात्किञ्चिद्दुर्मनीषिणः ।
कराली नाम सा ज्ञेया तया रक्षांसि लोपयेत् ॥

---

* प्रथमखण्डस्य १८७।१८८।१८९ पृष्ठेषु प्रदर्शितम् ।

† प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितम् ।

लोहितायां पिशाचांश्च यक्षे विद्वान् क्रतुक्रतौ ।
महालोहितया यक्षा तृप्तिमायान्ति शाश्वतीम् ॥
सुवर्णया यमो देवः पन्नगाः पद्मरागया ।
श्वेतया रुद्रदेवाश्च पीतया चेटकादयः ॥

अथ जिह्वास्तोत्रम् स्कान्दे ।

नमस्ते रसने देवि तपनस्य करालिनि ।
हुते* त्वयि समश्नन्ति राक्षसा बलदर्पिताः ॥
नमस्ते लोहिते जिह्वे ज्वलनस्य सुशोभने ।
पिशाचास्तृप्तिमायान्ति हुते त्वयि हविष्यके ॥
नमस्ते रसने देवि महालोहितसंज्ञके ।
हुते त्वयि समश्नन्ति यक्षगन्धर्वकिंनराः ॥
नमस्ते वीतिहोत्रस्य सुवर्णरसने शुभे ।
त्वयि तृप्ते यमो देवि ददाति विपुलं सुखम् ॥
पद्मरागे नमस्तुभ्यं देवपन्नगतर्पणे ।
जायते शाश्वती† देवि हुते त्वयि हुताशने ॥
ग्रहाणां तर्पणं देवि कुरु जिह्वे हविर्भुजः ।
हुते हविषि विश्वेश ग्रहतृप्तिर्भवेदिह ॥
चेटकाः क्षेत्रदेवाश्च समस्ताः कुलदेवताः ।
पीतायां हवने जाते तृप्तिमायान्ति शाश्वतीम् ॥

---

* हुते इति सार्थे, हुतायामिति पाठो युक्तः, रसनाशब्दस्य स्त्रीलिङ्गत्वात् ।

† सर्वकामिति शेषः ।

इति जिह्वास्तुतिं कृत्वा समाप्य विधिवत्कृतिम् ।
अभिषेकं ततः कुर्य्याद्दुहृदक्याः सुनुना सह ॥
ततस्तु दक्षिणा दत्त्वा आचार्य्याय मनीषिणे ।
अन्येभ्यो ब्राह्मणेभ्यश्च यथाशक्ति क्षमापयेत् ॥
कस्मैचिन्मस्तकं दद्यात् सोपधानं सदक्षिणम् ।
प्रेतराजं समुद्दिश्य मन्त्रेणानेन सत्तम ॥

मन्त्रो यथा ।

नमस्ते धर्म्मराजाय देवदेवाय ते नमः ।
मस्तकस्यास्य दानेन प्रीतो भव मम प्रभो ॥
यस्मिन् वस्त्रे रजो दृष्टं तद्दासस्तु परित्यजेत् ।
अपरं वस्त्रमादाय ब्राह्मणान् भोजयेत्ततः ॥
एवङ्कृते विधानेऽस्मिन् विघ्ना नश्यन्ति तत्क्षणात् ।
अन्ते सुखसन्तानैः सह भार्या निजे गृहे ।
आकल्पितदिवाहो यः स लभेद्दुःखमेव च ॥

इति विधानमालायां विवाहे रजोदोषशान्तिविधानम् ।

संग्रहे तु प्रकारान्तरमुक्तं यथा ।

प्रारम्भेऽभ्युदयश्राद्धे शुभसंस्कारकर्म्मणि ।
पत्नी रजस्वला चेत्स्यान्न कुर्य्यात्तत्पिता तदा ॥
अन्यार्थे समुहूर्त्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ॥

चौलादावपि एवमेव ज्ञेयम् । सङ्कटे तु हस्तलिमा एवमेवोक्तम् ।

अथ विधिवत्कन्यावरणमारभ्य त्रिरात्रादिव्रतसमाप्तिपर्यन्तं मध्यवर्त्तिनि काले अशौचप्राप्तौ तदपोह्य सद्यःशौचमाह चन्द्रिकाकारः ।

तत्र याज्ञवल्क्यः ।

ऋत्विजां दीक्षितानाञ्च यज्ञियं कर्म्म कुर्व्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने वि(वाहे)वाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ इति ।

ऋत्विजामिति ।

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

इति मनूक्तवरणसंस्कारसंस्कृतानां तत्प्रयोगपरि(वरण)समाप्तिपर्य्यन्तं ऋत्विजां दीर्घकालाशौचपाते(मध्ये)ऽपि सद्यःशौचं विधीयते इति सम्बन्धः । दीक्षितानामिति । दीक्षणीयेष्ट्यादिसंस्कारवतां यजमानानां दीक्षणात् प्रभृति अवभृथस्नानपर्य्यन्तं दीर्घकालाशौचमध्ये सद्यःशौचं कथ्यते ।

तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते* ॥

इति ब्रह्मवचनात् ।

सत्रिव्रतिदातृशब्दार्थाः मन्नूहे दर्शिताः । तथाहि ।

---

* धर्म्मोर्म्मिकृत मेत् ।

सत्री गृहीतनियमो यज्ञदानेषु दीक्षितः ।
चान्द्रायणाद्यनुष्ठाता व्रती स्याद् ब्रह्मचार्यपि ॥
श्राद्धे च कृतसङ्कल्पो व्रती भोक्ता च कीर्त्तितः ।
दाता नित्यमदाता वा नप्रशेषोऽत्र कीर्त्तितः ॥ इति ।

ब्रह्मचारिब्रह्मविदौ प्रसिद्धौ । दानं तुलापुरुषादौ, व्याधिपरिहारार्थं दानं वा । विवाहः प्रसिद्धः । यज्ञे संभृतसम्भारस्य, कालान्तरासम्भवे देशोपद्रवे सङ्ग्रामापदि च एतेष्वपि दीर्घाशौचबाधेन सद्यःशौचं विधीयते इत्यनुषङ्गः । तथाच कन्यादातुः प्रतिग्रहीतुश्च कन्यावरणप्रभृति विवाहसंस्कारनिष्पत्तिपर्यन्तं दीर्घकालाशौचप्राप्तावपि सद्यःशौचं द्रष्टव्यम् ।

स्मृत्यन्तरेऽपि ।

नरेन्द्रसचिवव्रतिनां विवाहोपप्लवादिषु ।
सद्यःशौचं समाख्यातं तत्तत्कार्ये विशेषतः ॥ इति ।

तत्तत्कार्ये इति विशेषणाभिधानादेवाद्देवादिकर्मसु चाशौचं दीर्घमस्त्येव । तत्र सद्यःशौचविधानाभावात्, यावद्वचनं वाचनिकमिति न्यायाच्च ।

यत्तु पैठिनसिवचनम् ।

विवाहव्रतयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं कुर्यात्कामं यज्ञादि कारयेत् ॥

ब्राह्मेऽपि ।

चय देवप्रतिष्ठायां गणयागादिकर्मणि ।
श्राद्धे च पितृयज्ञे च कन्यादाने च नो भवेत् ॥

तदेतदुपक्रान्तयज्ञादिकर्म्मविषयं द्रष्टव्यम् ।

तथाच बृहस्पतिः ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।

पूर्व्वसङ्कल्पितार्थे(न्ने)षु न दोषः परिकीर्त्तितः ॥

माधवीये ।

प्रारब्धायाग्निविवाहस्य माता यदि रजस्वला ।

निवृत्तिस्तस्य कर्त्तव्या सद्यस्त्वश्रुतिचोदनात् ॥

ब्राह्मेऽपि ।

अङ्कुरार्पणमारभ्य कलिजां वरणं तथा ।

श्रावके सूतके चैव दोषस्तत्र न विद्यते ॥

षट्त्रिंशन्मतेऽपि ।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।

परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः ॥

परैरसगोत्रैः ।

विष्णुरपि ।

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे ।

आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

आरम्भश्च तेनैवोक्तः ।

आरम्भो वरणं* यज्ञे सङ्कल्पो व्रतसत्रयोः ।

---

* वरणमिति मधुपर्कपरं, गृहीतमधुपर्कस्य यजमानस्य सत्विज । यद्यप्यदीक्षिते पतिते न भवेदिति निर्णय इति आलोकः । मधुपर्कात् पूर्व्वन्तु अवश्यं वार्य्यामिति प्रदीपविवेक ।

अथेदानीं कन्यादाता वाग्दानानन्तरं विधिवद्विवाहवेदिं कुर्य्यादिति ।

तत्कालमाह व्यासः ।

> कण्डनदलनयवारकमण्डपस्य वेदिवर्णकाद्यखिलम् ।
> तत्सम्बन्धि गतागतमपि वैवाहिके कुर्य्यात् ॥ इति ।

तत्प्रकारमाह नारदः ।

> हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रा समन्ततः ।
> स्तम्भैश्चतुर्भिः सुश्लक्ष्णा वामभागे तु (च) सद्मनि ॥
> समा तथा (चैव) चतुर्दिक्षु सोपानैरतिशोभिताम् ।
> प्रागुदक्प्रवणा रम्भास्तम्भहंसशुकादिभिः† ॥
> विचित्रामङ्कितां कुम्भैर्निहितैस्तोरणाङ्कुरैः‡ ।
> शृङ्गारपुष्प§निकरैर्वर्णकैः समलङ्कृताम् ॥
> विप्राशीर्वचनैः पुण्यैस्त्रिभिर्दीपैर्मनोहराम् ।
> वादित्रनृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम् ॥
> एवंविधामारुहेयुर्मिथुनं साग्निवेदिकाम् ॥ इति ।

हस्तप्रमाणमत्र सङ्कार्य्याया बध्वा ग्राह्यम्¶ । सोपानकरणं

---

* स्थिकाशा इति पाठ भाषा इति गोपीनाथः ।

† हस्तिशुकादिभिरित्याकरे पाठः ।

‡ विचित्रैश्चाङ्किते कुम्भैर्विविधैस्तोरणाङ्कुरैः इत्याकरे पाठः ।

§ शृङ्गारपुष्पाणि मालतीवकुलादीनि इति गोपीनाथः ।

¶ कन्याहस्तैः पञ्चभिः सप्तभिर्वा कार्य्या वेदिः कर्य्यहस्तोन्नता वा ।
इत्थं दश्मे निर्मितावामभागे जायापत्योराशिषं सम्प्रयुक्ता ॥ इति वचनात् ।

पश्चिमभागे उपरि चतुर्दिक्षु वा अधो वा यथाचारम्। वेद्या-यतुर्हस्तपरिमितत्वं सोपानव्यतिरेकेण द्रष्टव्यम्।

इति वेदिकाकरणम्।

अथ विवाहमण्डपकरणप्रकारः।

वशिष्ठः।

षोडशारत्निकं कुर्यान्मण्डपं वा द्विषट्करम्*।
वह्न्यष्टहस्तं रचयेच्चतुर्द्वारोपशोभितम्।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत्॥ इति।

तथाच यथासम्भवं षोडशहस्तं द्वादशहस्तमष्टहस्तं वा विवाह-मण्डपं कृत्वा स्तम्भतोरणादिभिरलङ्कृत्य मध्ये चतुर्हस्तां वेदिकां कुर्यादित्यर्थः।

नन्दिनी नलिनी चैव मैत्रा च ग्रयवर्मिणी।
आग्नेयादिक्रमात् पूज्या मध्ये ब्रह्माणमर्चयेत्॥

इति विवाहमण्डपकरणविधानम्।

शर्वोरोरमणमण्डलवक्त्रं पुण्डरीकदलसन्निभनेत्रम्।
चीरसागरसुतासुकलत्रं संनमामि मम वंशसुमित्रम्॥

अथेदानीं विवाहादौ कर्त्तव्यतया विहितत्वादङ्कुरार्पणविधान-मभिधीयते।

---

* द्विषट्कर द्वादशहस्तम्।

शौनकः ।

अथाङ्कुरार्पणविधिं प्रवक्ष्यामि विशेषतः ।
शौनकोऽहं द्विजातीनां मङ्गलार्थमुदीरितम् ॥
नवमे सप्तमे वापि पञ्चमे दिवसेऽपि वा ।
तृतीये वीजनक्षत्रे शुभवारे शुभोदये ॥
सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः ।
सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ॥
तत्र मृत्तिकाः खात्वा गृहीत्वा पुनरागतः ।
मृण्मयेष्वथवा वैणवेषु पात्रेषु वापयेत् ॥
सुमुहूर्त्तेऽथ कल्याणे गोमयेनोपलिप्य च ।
सिताक्षतैः सम्यकोर्ध्वं पालिकाः स्थापयेद्द्विजः ॥
मध्ये चतुर्मुखं विद्यात् पूर्व्वे वज्रिणमेव च ।
दक्षिणे तु यमं विद्यात् पश्चिमे वरुणं तथा ।
उत्तरे शशिनं विद्यात् पालिकानाञ्च देवताः ॥
वल्मीकमृत्तिकां ह्राद* शुष्कगोमयमेव च ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाविधि ॥
दूर्व्वाश्वत्थपर्णञ्च शिरीषं बिल्वपत्रकम् ।
तासां मूलेषु विन्यस्य श्वेतसूत्रेण मण्डिताः ।
मध्ये ब्रह्माणमावाह्य गन्धाद्यैरर्च्चयेत् क्रमात् ॥
इन्द्रादिकम एवं स्यादसुषे नम एव च ।

* ह्राद ह्रदपङ्कमिति ग्रन्थकारेणैव १० पृष्ठे ५ पङ्क्तौ व्याख्यातम् ।

तिष्ठन् कर्त्ता जपेन्मन्त्रं यथात् प्राङ्मुख एव च ॥
दिशो यतोऽभ्यस्यामि सर्व्वकामफलप्रदान् ।
कुर्व्वन्तु सफलं कर्म्म कुर्व्वन्तु सततं शुभम् ॥
व्रीहियवमाषतिलमुद्गमिश्रितसर्षपान् ।
तान् प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ।
रात्रौ मुहूर्त्ते कल्याणे कारयेदङ्कुरार्पणम् ॥
ब्रह्मजज्ञानमिति तु* मध्ये ब्रह्माणमर्चयेत् ।
यत इन्द्र भयामहे† प्राच्यां प्रक्षेपयेद्द्विजः ॥
गाके सुपर्णमिति चैव‡ ततो दक्षिण एव तु ।
तत्त्वायामीति§ मन्त्रेण प्रतीच्यां वापयेद्द्विजः ।
सोमो धेनुमुदीच्याञ्च ओषधीर्वापयेत् क्रमात् ॥
शुक्लाभिः सिकताभिश्च प्रच्छाद्यापः प्रसेचयेत् ।
विधाय शुक्तये सर्व्वमाप्याममिति मन्यते ॥
मासमात्रजातानाञ्च आषष्ठात् पुनरायनम् ।
पञ्चमाद्दशमान् विप्रो सर्व्वकामफलप्रदे ॥
चतुर्थं चाङ्कुरं विद्यात् पापीयान् जायते तु सः ।

---

* ब्रह्मजज्ञानमिति मन्त्रोऽयं प्रथमखण्डस्य १०८ पृष्ठे प्रदर्शितः ।

† यत इन्द्रेति ऋगियं प्रथमखण्डस्य २११ पृष्ठे प्रदर्शिता ।

‡ गाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥
१०म १२३म् ६ऋक् ।

§ तत्त्वायामीति ऋगियं द्विविधा, प्रथमखण्डस्य ६८।२१८ पृष्ठयोर्दर्शिता ।

¶ सोमो धेनुमिति ऋगियं प्रथमखण्डस्य ४२१ पृष्ठे प्रदर्शिता ।

नवाह्ने सर्व्वकामानामङ्कुराहनि चोद्यते ॥
आयुष्करं श्रीप्रदञ्च शुभेष्वन्येषु सर्व्वशः ।
तस्मात्सर्व्वेषु कार्य्येषु वापयेदङ्कुरार्पणम् ।
यद्यङ्कुराणां रहितं तत्कार्य्यांशुभकारणम् ॥
सद्योऽङ्कुरार्पणं वापि सद्यः कर्त्तुं समीहितः ।
अशक्तो तण्डुलैः शुद्धैः सद्य एव शुभाङ्कुरैः ॥
पालिकानि प्रपूर्य्यैवं पञ्च त्रीण्येकमेव वा ।
अलङ्कृत्य च पत्राद्यैः पुष्पैरापूर्य्यतेऽपि च ।
अङ्कुरोक्ताः क्रियाः सर्व्वास्तैस्तैरेव समाचरेत् ॥
ओषधीनाञ्च सर्व्वासां चन्द्रः प्रोक्तोऽधिदैवतम् ।
तस्मात्सर्व्वप्रयत्नेन तेन रात्र्यङ्कुरार्पणम् ॥
वास्तुकर्म्मणि चौले च दिवा स्यादङ्कुरार्पणम् ।
अन्यत्र रात्रौ कुर्व्वीत न तथाह्नि कदाचन ॥
आधानं गर्भसंस्कारं जातकर्म्म च नाम च ।
हित्वाङ्कुरार्पणं विद्यादन्यत्र शुभकर्म्मसु ॥
इति शौनकोक्तमङ्कुरार्पणविधानम् ।

अथास्य स्पष्टप्रयोगो लिख्यते । यथा—

गर्भाधानादिनामान्तकर्म्माणि मुक्त्वा अन्नप्राशनादिविवाहान्तेषु अपत्यसंस्कारेषु नवगृह(ग्र)हप्रवेशाद्यन्येष्वपि शुभकर्म्मसु च करिष्यमाणकर्म्मणः पूर्व्वं नवमे सप्तमे पञ्चमे तृतीये दिने सद्यो वा अङ्कुरार्पणं कर्त्तव्यम् ।

तत्रायं क्रमः । पालिकादिसम्भारानुपकल्प्य सुस्नातः पीठोप-

विष्टौ यजमानस्त्रियादि सहीर्व्यं अमुककर्मसाफल्यनिरन्तरशुभत्व-सिद्धिद्वारा परमेश्वरप्रीत्यर्थमङ्कुरार्पणाख्यं कर्माहं करिष्ये इति सङ्कल्प्य शुद्धभूमिमुपलिप्य रङ्गवल्ल्यादिभिरलङ्कृत्य तत्र सिता-न्वतान् सम्प्रकीर्य तत्र नववेणुपात्रं किञ्चिद्गम्भीरं सुवेणपार्श्व तदेव पालिकात्वेन सस्थाप्य तत्र वल्मीकमृत्तिका कर्दमच्छं शुष्क-गोमयचूर्णं च प्रक्षिप्य पालिकामु(खि)त्व श्वेततण्डुलैः पूरयित्वा दूर्वाङ्कुराश्वत्थशिरोपविल्वपत्राणामुपरि शुभे मुहूर्ते तद्वेणुपात्रं प्रक्षिप्य सितरक्तहरितवर्णानि पुष्पाण्यवकीर्य मध्यादिपञ्चस्थानेषु ब्रह्मादिदेवान् पूजयेत् ।

तत्र ब्रह्मजज्ञान नकुलो ब्रह्मा त्रिष्टुप् । अनेन पालिकामध्ये ब्रह्माणमावाहयेत् । यत इन्द्र भयामहे भग इन्द्रो बृहती । अनेन पूर्वभागे इन्द्रम् । नाके सुपर्णं यमो यमस्त्रिष्टुप् । अनेन दक्षिणे यमम् । तत्त्वायामि वरुणस्त्रिष्टुप् । अनेन पश्चिमे वरुणम् । सोमो धेनुं गौतमः सोमस्त्रिष्टुप् । अनेन चोत्तरे सोममावाहयेत् । एवं ब्रह्मादिलिङ्गकैरन्यैर्वा स्वशाखोक्तैर्मन्त्रै-र्ब्रह्मादिपञ्चदेवान् यथाक्रमेणावाह्य ब्रह्मणे नमः । इन्द्राय नमः । यमाय नमः । वरुणाय नमः । सोमाय नम. । इति नाम-मन्त्रैरासनादिक्रमेण* षोडशोपचारैः पदार्थानुसमयेन काण्डानु-समयेन वा पञ्च देवताः सम्यगभ्यर्च्य पालिकापश्चिमतः कर्त्ता प्राङ्मुखस्तिष्ठन् उपतिष्ठेत । तत्र मन्त्राः—

---

* पञ्चादशादिक्रमेण इति ख पुस्तके पाठः ।

दिशां पतीन्नमस्यामि सर्व्वकामफलप्रदान् ।
कुर्व्वन्तु सफलं कर्म्म कुर्व्वन्तु सततं शुभम् ॥ इत्यादयः* ।

ततो व्रीहियवमाषतिलमुद्गसर्षपान् गोमयतोयेन प्रक्षाल्य ब्रह्मजज्ञानमित्यादिभिः पूर्व्वोक्तैः पञ्चभिर्मन्त्रैः† क्रमेण पञ्चसु स्थानेषु बीजान्यावपेत्। ततः शुक्लाभिः सिकताभिः प्रच्छाद्य अपः प्रसेचयेत्। त(तः)च पञ्चगव्यं समस्तकं प्रसिञ्चेदिति ग्रन्थान्तरे उक्तम्।

सद्योऽङ्कुरार्पणपक्षे ब्रह्मादिदेवतावाहनादि कृत्वा शुक्लैस्तण्डुलैः स्वतः सिद्धैर्धान्याङ्कुरैर्वा पालिकां प्रपूर्य पद्मादिपुष्पैरलङ्कृत्य अङ्कुरोक्ताः सर्व्वाः क्रियास्तैरेव कारयेत्।

इदमङ्कुरार्पणाख्यं कर्म्म रात्रौ कार्य्यम्। वास्तुकर्म्मणि चौलकर्म्मणि च दिवैव कार्य्यम्। पञ्चपालिकादिपक्षेऽपि प्रतिपालि(का)कमेयमेव क्रियावृत्तिः। वंशपात्ररूपा पालिकेति प्रयोगपारिजातोक्तिः। विधानप्रकाशादौ तु धातुमयरूपा मृन्मयरूपा वा ग्राह्या।

इति श्रीविधानपारिजाते अङ्कुरार्पणविधानम्।

अथ कौतुकबन्धविधानम्।

तथाच शौनकः।

अथ कौतुकबन्धस्य प्रयोगोऽत्र निगद्यते।
विवाहादौ शुभे कार्य्ये रात्रौ वाह्नि कृते तथा ॥

---

* १२ प्रश्ने उक्ता।

† १२ पृष्ठे द्रष्टव्यैः।

माहुरे पालिकायुक्ते स्थले दुन्दुभि(पूरिते)नादिते ।
महाचलेन कांस्येन सोदकुम्भं निधाय च ।
कार्पासोऽवसूत्रन्तु त्रिगुणीकृत्य पञ्च वा ॥
निधाय तण्डुलान् पात्रे पूर्वे कुम्भं निधाय च ।
कुशैः कुम्भोदकैर्मन्त्रैः प्रोक्ष्य विप्रः सुखासने ॥
भूर्भुवः स्वः सावित्र्या ऋग्भिर्वेदादिभिस्तथा ।
आपो हिष्ठादिकाब्लिङ्गैः शुद्धवत्यघमर्षणैः ॥
शुद्धवत्या स्वस्तिमत्या पावमानैस्तथैव च ।
रक्षोहणञ्च वाक्षिञ्च कयाश्वेति तथैव च ॥
तरत्समन्दीं* पुरुषं† विष्णुसूक्तं तथैव च ।
अतो देवा अवन्त्विति परो मात्रा तथैव च ॥
श्रीसूक्तं शिवसङ्कल्पं वायुसूक्तं§ तथैव च ।
सुचामि त्वेति सूक्तञ्च स्योना पृथ्वि भवेति च ॥
द्रविणोदाः सवितेति नवो विघ्नं नयेति च ।
उलूकया पिशङ्गेति ऋग्भिरेताभि(र्ऋ)र्त्विजैः¶ ॥

---

* प्रथमखण्डस्य १७८ पृष्ठे १० पङ्क्तौ सन्ति ।

† प्रथमखण्डस्य १८०।१८१।१८६ पृष्ठेषु सन्ति ।

‡ पुरुषसूक्त त्रिपादूर्ध्व इत्यादिक मन्त्रोदयार्थं प्रथमखण्डस्य ११३।११६ पृष्ठयोः प्रदर्शितम् ।

§ वायुसूक्तमाह—"वात आवातु भेषजं शम्भु मयोभु नो हृदे ।
प्र न आयूंषि तारिषत् ॥"
मन्त्रोऽयं आश्वलायनपाठपूर्वक पाठ्य इति सुधाप्रकाशकानतयो सर्वत्रापि ।

¶ एते मन्त्रा अनुपदमेव दर्शयिष्यन्ते ।

जातवेदस इत्यृचा* सूत्रमादाय लेपयेत्।
गन्धेन दक्षिणे हस्ते बध्नाः पुंसस्तु तन्तुना॥
विश्वेत्ता ते सवनेति स्त्रीणां सव्यकरे तथा।
शिवो जात ऋचैकया†प्यथवर्य्युत समाहितः॥
शतं जीवेति ताभ्याञ्च त्वामिद्धीत्यृचैकया‡।
ये यज्ञेन तथाष्टाभिस्त्र्यम्बकमृचैकया§॥
भस्मना चाक्षतैर्वापि रक्षां कृत्वा समापयेत्।
इत्याहाचार्य्यो हेमाद्रि कल्पविस्तरः पूज्य भाषितः।
विद्वान् सर्व्वप्रयत्नेन कुर्य्यात् कौतुकबन्धनम्॥ इति।

अथास्य प्रयोगः।

विवाहादौ शुभकर्म्मणि साङ्कुरे पालिकायुक्ते स्थले मङ्गलसूचनादे कृते सति कौतुकबन्धं कुर्य्यात्। तत्रायं क्रमः। आचार्य्यो दर्भमये कूर्च्चे उदकुम्भं निधाय साक्षतकांस्यपात्रे पञ्चगुणितं त्रिगुणितं वा कार्पाससूत्रं निधाय च तत्समीपे यजमानमुपवेश्य कुशहस्तोऽर्ज्जलिभिः सह कुम्भोदकेन तत् सूत्रमभिषिञ्चेत्।

---

* प्रथमखण्डस्य ४२० पृष्ठे प्रदर्शिता।

† प्रथमखण्डस्य १६० पृष्ठे प्रदर्शिता।

‡ इयमृक्सामगी गाथात्मकी—
त्वामिद्धि हवामहे साती वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥
अश्वस्य त्रि पाठ कार्य्य इति तर्कवाचस्पतयः।

§ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ ३अ ६०म यजु।

तत्र मन्त्राः ॥

व्याहृतिपूर्व्वा गायत्री* । अग्निमीळे† । इषे त्वोर्ज्जे त्वा‡ । अग्न आयाहि§ । शन्नो देवी¶ । आपो हि ष्ठेति मन्त्रत्रयम्‖ । एतो न्विन्द्रम्** । ऋतं चेति मन्त्रद्वयम्†† । प्रशर्द्धायेति मन्त्रः‡‡ । स्वस्ति नो मिमीतामिति मन्त्रत्रयम्§§ । स्वादिष्ठयेति दशर्चं सूक्तम्¶¶ ।

* प्रथमखण्डस्य ७९ पृष्ठे प्रदर्शिता ।

† अग्निमीळे इति मन्त्रोऽस्य प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितः ।

‡ इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे । (य १म [illegible] )

§ अग्न आयाहीति मन्त्रोऽस्य प्रथमखण्डस्य ११० पृष्ठे प्रदर्शितः ।

¶ शन्नो देवीरिति मन्त्रोऽस्य प्रथमखण्डस्य ९० पृष्ठे प्रदर्शितः ।

‖ आपो हि ष्ठेति मन्त्रत्रयं प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितम् ।

** एतो न्विन्द्रमिति मन्त्रोऽस्य प्रथमखण्डस्य १४१ पृष्ठे प्रदर्शितः ।

†† ऋतञ्चेति मन्त्रद्वयं प्रथमखण्डस्य १३६ पृष्ठे प्रदर्शितम् ।

‡‡ प्रशर्द्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते ।
घर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत ॥ ऋ. ५।५४। १ऋक् ।

§§ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११ ॥
स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२ ॥
विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ऋ. ५।५१। १३ऋक् ।

¶¶ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥
वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥

हिरण्यवर्णामिति पञ्चदशर्चं सूक्तम्* । यज्जाग्रत इति षडृचं सूक्तम्† । वीतिहोत्रेति पञ्चर्चं वायुसूक्तम्‡ । सुम्नामीति

---

इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

ऋग् ९९सू. ७मण्ड।

* हिरण्यवर्णामिति सूक्तं प्रथमखण्डस्य १६।१७।१८ पृष्ठयोर्द्रष्टव्यम् ।

† यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥

३४अ. ६म. यजुः ।

‡ वीतिहोत्रा त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे ॥
अधा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥
अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनंधनम् ॥ सामवेदः ।

पञ्चर्चं सूक्तम्* । स्योना पृथिवि† । द्रविणोदा‡ । सविता पश्चातात्§ । नवो नवो भवति¶ । विद्युन्न या पतन्ती‖ । उलूकयातुम्** । पिशङ्गभृष्टिम्†† । एता मन्त्र ऋचः । एतै-र्व्याहृत्यादि पिशङ्गभृष्टिमित्यन्तैर्मन्त्रैः कूर्चेन कलशोदकेन स्न

---

* मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ १ ॥
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥ २ ॥
सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् ।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥ ३ ॥
शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ ४ ॥
आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ ५ ॥ १०म १६१सू ५ऋक् ।

† स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥
१म २२सू १५ऋक् ।

‡ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ २६अ २२म यजु ।

§ सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १०म ३६सू १४ऋक् ।

¶ नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १०म ८५सू १९ऋक् ।

‖ विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ १०म ९५सू १०ऋक् ।

** उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥ ७म १०४सू २२ऋक् ।

†† पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो नि बर्हय ॥ १म १३३सू ५ऋक् ।

मभिषिच्य जातवेदस इति मन्त्रेण गन्धेन सूत्रं लेपयित्वा विक्षेत्ता तः इति मन्त्रेण आचार्य्यः पुंसो दक्षिणहस्ते सूत्रं बध्नीयात् । स्त्रियास्तु श्रिये जात इति मन्त्रेण† वामहस्ते बध्नीयात् । तत ऋत्विजोऽध्येष्यमानस्य समन्तं रक्षां कुर्य्युः । तत्र मन्त्राः । शतं जीवेति द्वयम्‡ । ये यज्ञेनेत्यष्टर्चम्§ । अयम्बकं यजा-

---

विमेता ते प्रथमेत् मघाप्या वा जयार्थं मघवन्निष्ट गृभ्णे ।
धारायत यत् पुरुकमुत बलपाइयो अयभाय ऋषिवध्वै ॥ ऋक् १०म (मण्ड.)

† मदमसाध्य १६० सूक्ते प्रदर्शितम् ।

‡ २१ पृष्ठे ११—१४ पङ्क्तिषु प्रदर्शितम् ।

§ ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।
तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥
य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे बलम् ।
दीर्घायुत्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ २ ॥
य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ३ ॥
अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ४ ॥
विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥ ५ ॥
ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते ॥ ६ ॥
इन्द्रेण युजा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम् ।
सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत ॥ ७ ॥
प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।
यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥ ८ ॥ १०म ६२सू ऋक् ।

महे इति च*। ततो यजमानः कर्मसाद्गुण्यार्थमाचार्यादिभ्यो यथाशक्ति दक्षिणां दद्यात्।

कर्मादौ बन्धनं प्रोक्तं कर्मान्ते तद्विसर्जनम्।

तत्र मन्त्रो यथा।

कङ्कणं मोचयाम्यद्य रक्षा (न तु) तु न कदाचन।
मयि रक्षां विधायाशु देव त्वं गच्छ कङ्कण॥

इति मन्त्रेण कङ्कणं विसर्जयेत्।

इति शौनकोक्तं कौतुकबन्धनविधानम्।

अथ कात्यायनमतानुसारि कौतुकबन्धनविधानम्।

विनायकं नमस्कृत्य गिरिपुत्रीं च मूर्द्धनि।
कात्यायनमतप्रोक्तो रक्षाबन्धो विधीयते॥
विनायकं तु संपूज्य शुद्धैर्गन्धाक्षतादिभिः।
प्राणायामत्रयं कृत्वा सङ्कल्प्य च यथाविधि॥
प्रक्षाल्य कांस्यपात्रन्तु शुद्धगङ्गाजलेन च।
ताम्बूलं तत्र विन्यस्य अक्षता सहितं तथा॥
सौवर्णं राजतं वापि क्षौमं कार्पासमेव वा।
तन्तुत्रयं तथा पुंसां स्त्रीणान्तु द्विगुणीकृतम्॥
पावमानेन सूक्तेन† सूत्रस्यैवाभिषेचयेत्।
आपो हि ष्ठेति मन्त्रेण‡ संस्कार्यस्याभिषेचनम्॥

---

* मन्त्रोऽयं १० पृष्ठे प्रदर्शितः।

† सहस्राक्षं शतधारमृषिभिः पावनं कृतम्।
तेन त्वामभिषिञ्चामि पावमान्यः(न्यो) पुनन्तु मे॥ इत्यादिरूपेण।

‡ प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितेन।

सूत्रं गन्धेन संलिप्य अंशुना तेति* मन्त्रतः।
दीर्घायुस्तेति मन्त्रेण† खानित्रा योजयेत्तन्तुम्॥
त्रियम्बकेन मन्त्रेण‡ भूतिं दत्त्वा ललाटके।
तूष्णीं ततो शिवारञ्च भस्म दद्यात्तथैव च॥
यदाबध्नेति मन्त्रेण§ पुंसो वै दक्षिणे करे।
बध्नीयात् सूत्रकञ्चैव स्त्रियास्तद्वामके करे।
त्रीणि त आहुर्मन्त्रेण¶ इति कात्यायनोदितम्॥

इति कात्यायनोक्तं कौतुकबन्धविधानम्।

## अथ हरिद्रास्नानम्।

तथाच आश्वलायनकारिका।

स्यादाभ्युदयिकं श्राद्धं हरिपूर्त्तेषु कर्मसु।

हरिपूर्त्तशब्दार्थं स्वयमेवाह।

---

* अंशुना ते अंशुः पृच्यतां परुषा परुः।
गन्धस्ते सोममवतु मदाय रसो अच्युतः॥ २०अ. २७म. यजु।

† दीर्घायुत्वा ओषधे खनिता यस्मै च त्वा खनाम्यहम्।
अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात्॥ १२अ. १००म यजु।

‡ प्रथमस्तवकस्य १८१ पृष्ठे उक्तेन।

§ यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः।
तन्म आबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम्॥ ३४अ ५२म. यजु।

¶ त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे।
उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम्॥ १म १६३सू ऋक्।

महे इति च* । ततो यजमानः कर्म्मसाद्गुण्यार्थमाचार्य्यादिभ्यो यथाशक्ति दक्षिणां दद्यात् ।

कर्म्मादौ बन्धनं प्रोक्तं कर्म्मान्ते तद्विसर्जनम् ।

तत्र मन्त्रो यथा ।

कङ्कणं मोचयाम्यद्य रक्षां (न तु) तु न कदाचन ।
मयि रक्षां विधायाशु देव त्वं गच्छ कङ्कण ॥

इति मन्त्रेण कङ्कणं विसृजेत् ।

इति शौनकोक्तं कौतुकबन्धनविधानम् ।

अथ कात्यायनमतानुसारि कौतुकबन्धनविधानम् ।

विनायकं नमस्कृत्य गिरिपुत्रीञ्च मूर्द्धनि ।
कात्यायनमनुप्रोक्तो रक्षाबन्धो विधीयते ॥
विनायकं तु संपूज्य शुद्धैर्गन्धाक्षतादिभिः ।
प्राणायामत्रयं कृत्वा सङ्कल्प्य च यथाविधि ॥
प्रक्षाल्य कांस्यपात्रन्तु कुशमिश्रजलेन च ।
ताम्बूलं तत्र विन्यस्य भस्मना सहितं तथा ॥
सौवर्णं राजतं वापि क्षौमं कार्पासमेव वा ।
तन्तुत्रयं तथा पुंसां स्त्रीणान्तु त्रिगुणीकृतम् ॥
पावमानेन मन्त्रेण† सूत्रञ्चैवाभिषेचयेत् ।
आपो हि ष्ठेति मन्त्रेण‡ संस्कार्य्यस्याभिषेचनम् ॥

---

* मन्त्रोऽयं १० पृष्ठे प्रदर्शितः ।

† सहस्रेण शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ इत्यादिरूपेण ।

‡ एतन्मन्त्रस्य ४८ पृष्ठे प्रदर्शितः ।

सूत्रं गन्धेन संलिप्तं दंशना नेति* मन्त्रतः ।
दीर्घायुस्तेति मन्त्रेण† आशिषा योजयेदृढम् ॥
निशम्यमेन मन्त्रेण‡ भूतिं दत्त्वा ललाटके ।
तूष्णीं ततो हिवारस्य भस्म दद्यात्तथैव च ॥
यदाबध्नेति मन्त्रेण§ पुंसो वै दक्षिणे करे ।
बध्नीयात् सूत्रकञ्चैव स्त्रियाश्चैवामके करे ।
त्रीणि त आहुमन्त्रेण¶ इति कात्यायनोदितम् ॥
इति कात्यायनोक्तं कौतुकबन्धविधानम् ।

अथ हविश्राद्धम् ।

तथाच आश्वलायनकारिका ।
स्यादाभ्युदयिकं श्राद्धं हविपूर्त्तेषु कर्म्मसु ।
हविपूर्त्तशब्दार्थं स्वयमेवाह ।

---

* मनसा ते अस्य हृष्यतां मनसा सह ।
मन्त्रेण सोममप्रतु प्रदाय रक्षो भवतु ॥ २०श २७म यजुः ।

† दीर्घायुत्व ओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥ १२श १००म यजुः ।

‡ प्रथमखण्डस्य १८१ पृष्ठे द्रष्टव्यम् ।

§ यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ।
तन्म आबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम् ॥ ३४श ५२म यजुः ।

¶ त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम् ॥ १म १६३सू ४ऋक् ।

पुंसवनसीमन्तचौलोपनयनेष्विह ।
विवाहे चानलाधानप्रभृतिष्वौतकर्मसु ॥
इदं श्राद्धं प्रकुर्व्वन्ति द्विजा वृद्धिनिमित्तकम् ।
अन्ये षोडशसंस्कारेष्वावसथ्यादिष्वपीष्यते ।
वाप्याद्युत्सर्पणादौ तु कुर्य्याद् पूर्त्तनिमित्तकम् ॥ इति ।

चन्द्रिकायां विष्णुपुराणे ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितॄनादौ तर्पयेत् प्रयतो गृही ।
तानिष्ट्वा पितृयज्ञेन वैदिकं कञ्चिदाचरेत् ॥

ब्राह्मेऽपि ।

जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम् ॥
वेदव्रतेषु चाधानयज्ञपुंसवनेषु च ।
नवान्नभोजने स्नाने भार्य्यायाः प्रथमार्त्तवे ॥

स्नाने समावर्त्तने ।

देवारामतडागादिप्रतिष्ठोत्सवेषु च ।
राजाभिषेके बालान्नभोजने वृद्धिसप्तकान् ॥
नान्दीमुखान् पूज्यतमांस्तथा मातृगणानपि ।

---

* नान्दीमुख पितृगणम् इति कल्पतरौ पाठः ।

वनस्थाद्याश्रमं* गच्छन् पूर्व्वेद्युः सद्य एव च ।

पितॄन् पूर्व्वोक्तविधिना तर्पयेत् कर्म्मसिद्धये ॥ इति ।

क्वचिन्नान्दीश्राद्धस्य सकृत्त्वमाह ।

गणशः क्रियमाणानां मातॄणां पूजनं सकृत् ।

सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

अस्यार्थः । देशान्तरगतस्य चिरकालाश्रूयमाणसद्भावस्य मृतबुद्ध्या पुत्त्रादिना कृतप्रेतकार्य्यस्य कालान्तरे समागतस्य तस्यैव यदा जातकर्म्मादयः संस्कारा युगपत् क्रियन्ते,—अथवा उपनयनात् प्राक् स्वकाले कथञ्चिदकृतचौलपर्य्यन्तसंस्कारस्य जातकर्म्मादयोऽपि यदा उपनयनकाले सम्भूय क्रियन्ते,—तदा तेषु संभूय क्रियमाणेषु संस्कारेषु मातृपूजाया नान्दीश्राद्धस्य च सकृत्तन्त्रेण प्रथमतः क्रियमाणकर्म्मणः आदावनुष्ठानं कर्त्तव्यम्, न पृथगादिषु नानाया संस्कारकर्म्मणामादिषु कार्य्यमित्यर्थः ।

अत्र मातृपूजनं पूर्व्वमुक्तं विष्णुपुराणे ।

तत्रापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः ।

अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत् ।

तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥ इति ।

मनुरपि ।

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।

पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

---

* वानप्रस्थाश्रमादिकं, यदा गृहस्थाश्रमं विहाय वनं गन्तुमिच्छेदित्यर्थः ।

मातर उक्ताश्चतुर्विंशतिमते ।

श्राद्धे ह्यभ्युद(यि)यमाभे देवतास्थापनं स्मृतम् ।
जातिधर्मकुलश्रेणीलोकाना हृद्धिकारकम् ॥
तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितृमातृः स्वसाष्टमी ॥
ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।
वृद्धादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितृन् ॥
मातृपूर्व्वान् पितृन् पूज्य ततो मातामहानपि ।
मातामहीमतः केचिद्युग्मा भोज्या द्विजातयः ॥

अस्यार्थः । वृद्धिश्राद्धे कर्त्तव्ये सति पूर्व्वं स्थण्डिलादौ मातृगणः समूज्यस्तद्यथा पितृपक्षे तिस्रो मातृपितामहीप्रपितामह्यः पूज्याः । तथा मातामहवर्गे मातामह्याद्यस्तिस्रः पितृष्वसा मातृष्वसेत्यष्टौ मातृभ्यो मातरः । ब्रह्माण्याद्याः सप्त देवमातर । तथा दुर्गागणाधिपक्षेत्राधिपाश्च षोडशैरुपचारैः संपूज्य नान्दीमुखान् पितृन् श्राद्धेन पूजयेदिति प्रयोगपारिजाते व्याख्यातम् ।

अथवा कात्यायनोक्ता मातरः पूज्याः यथा ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
आवाह्य गन्धपुष्पाणि धूपं दीपं निवेदयेत् ॥

तथा वसोर्धारामातरः कुड्ये समालिख्य पूज्या इत्युक्तं तत्रैव ।

कुड्यलग्ना वसोर्धाराः पञ्च वाथ घृतेन तु ।
कारयेत्सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥
आयुष्याणि च शान्त्यर्थं जपित्वाथ समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥ इति ।

इदं कात्यायनपरिशिष्टोक्तकातीयानां शाखमाध्यन्दिनानामेवेति वेदितव्यम् । षड्भ्यः पितृभ्य इति । तेषां सूत्रे नान्दीश्राद्धस्य षड्दैवत्याभिधानादविरुद्धम्, षडर्थं वा स्वगृह्योक्तमिति वचनानु-प्रमाणात् । प्रयोगपारिजातकृता तु षड्भ्यः श्राद्धमुपक्रमेदित्येवं व्याख्यातम् । त्रिभ्यः पित्रादिभ्यस्त्रिभ्यो मातामहादिभ्यो मातृ-श्राद्धपूर्वकं श्राद्धमुपक्रमेत् ।

अन्नप्राशनसन्ताने यज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥

इति हेमाद्रौ मत्स्यपुराणवचनात् । तदेतदाश्वलायनशाखादि-विषयत्वेन नेतुं शक्यते ।

माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥

इत्याश्वलायनस्मरणात् । अत्र नान्दीश्राद्धे आश्वलायनकात्यायना-दीनां पित्रादिक्रम एव न तु प्रपितामहादिक्रमः । तत्तच्छा(खी)-खाप्रवर्त्तकाश्वलायनकात्यायनाभ्यां स्वस्वसूत्रे तादृशक्रमस्य प्र-दर्शितत्वात् ।

यत्तु ।

नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम् ।
नाम सङ्कीर्त्तयेद्विद्वानन्यत्र पितृपूर्व्वकम् ॥

इति वृद्धवशिष्ठवचनं तदेतच्छाखान्तरीयमिति मन्तव्यम् । हेमाद्रयादयोऽप्येवमेव मेनिरे ।

तत्कालमाह वशिष्ठः ।

पूर्व्वेद्युर्मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
उत्तरेद्युः प्रकुर्व्वीत मातामहगणस्य तु ॥

पक्षान्तरमाह वृद्धशातातपः ।

पूर्व्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥

अत्राप्यशक्तौ वृद्धमनुः ।

असम्भवे श्राद्धकालाना नान्दीश्राद्धत्रयं बुधः ।
पूर्व्वेद्युरेव कुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकम् ॥ इति ।

वृद्धशातातपस्तु ।

पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे ।
श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवन्तु तान्त्रिकम् ॥ इति ।

श्राद्धक्रममाह प्रचेताः ।

मातृश्राद्धन्तु पूर्व्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥

एतद्विवाहादिमहाकर्म्मविषयम् । अन्ये तु तदहरेव कार्य्यम् ।

तथाच छन्दोगपरिशिष्टम् ।

मदत्तु पूर्व्वेद्युरुत्तदहरिवाख्येषु इति ।

यतिरपि ।

पूर्व्वाह्ने तु भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।

पुत्रजन्मनि कुर्व्वीत श्राद्धं तात्कालिकं बुधः ॥ इति ।

विश्वेदेवादयोऽत्र नान्दीमुखा इति विशेषणीया इत्युक्तं हेमाद्रौ ।

ऊर्द्ध्वकक्षास्तु ये तत्र ते नान्दीमुखसंज्ञकाः । इति ।

कात्यायनसूत्रेऽपि ।

नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छतीत्यादि ।

अत्रेदं तात्पर्य्यम् । द्विविधा नान्दीमुखाः पित्रादयस्त्रयः प्रपितामहपित्रादयश्च । तत्र पित्रादयो नान्दीमुखा वृद्धिश्राद्धदेवता ज्ञेयाः ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः ।

प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ॥

इति ब्रह्मपुराणे तेषामेव मङ्गलकर्म्मसु देवतात्ववचनात् । प्रपितामहस्य पित्रादयस्तु प्रौष्ठपदीपौर्णमासीनिमित्तश्राद्धे देवता इति मन्तव्यम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

इत्युक्त्वा

तेभ्यः पूर्व्वतराः पञ्च प्रभावन्तः सुमेधिनः ।

ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥

इति तेषामपि नान्दीमुखसंज्ञा विधाय

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वाराहवचनं यथा ॥

इति ब्रह्मपुराणवचनात् । अत सिद्धं वृद्धिश्राद्धे पित्रादि-
त्रिकस्यैव देवतात्वमिति । प्रयोगपारिजाते हेमाद्रौ च एवमेव
व्याख्यातम् ।

अन्येऽपि विशेषा कारिकायाम् ।

प्राङ्मुखोऽप्रोपवीती स्या(द)दुपचारं प्रदक्षिणम् ।
तिलकार्य्यं यवैः कुर्यात् युग्मानत्र निमन्त्रयेत् ॥
ऋजुदर्भास्तमूलाश्च द्वयैर्वास्तरणेषु तु ।
प्राक्संस्थेषु च आसिष्य पूर्ववच्छ्राद्धमन्वर ता ॥
तिलो सोमेति पदस्थाने यवोऽसीति पद वदेत् ।
स्वधयेति पदस्थाने तुष्ट्याग्रब्दं वदेत्तथा ॥
पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति ।
स्वधानम पदस्थाने वदेत् स्वाहानम पदम् ॥
अथाश्यन्तु यथापाठमुक्ताश्चैष्यावपेटयवान् ।
नान्दीमुखास्तु पितरः प्रीयन्तामिति सन्नत ॥
सम्बन्धनामरूपाणि वर्जयेदत्र कर्मणि ।
निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ॥
पित्रर्थमुपविष्टस्य सकृदर्घ्यं निवेदयेत् ।
द्विर्द्विर्गन्धादि दातव्यमित्यादि ॥

अन्येऽपि विशेषा स्वायसूत्रादवगन्तव्या ।

तथा ।

> अत तृप्तिपरिज्ञानपर्य्यन्तं पूर्व्ववद्भवेत् ।
> मधुवातेत्यृचः स्थाने उपास्मै गायता नरः ॥
> पञ्चर्चः* श्रावयित्वाक्षन्निति† च श्रावयेदृचम् ।
> सम्पन्नवचनादि स्यादाचान्तेषु द्विजन्मसु ॥
> द्विजभुक्ताग्रयं सम्यग्गोमयेनोपलेपयेत् ।
> सप्त प्रागग्रकान् दर्भानास्तृणाति ततः परम् ॥
> घृतदाध्यं च कुर्व्वीत दध्या (लयन्ति) नयति सर्पिषा ।
> घृतदाध्येन सम्मिश्रं भुक्तशेषं हुतं भवेत् ॥
> एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत् ।
> यथानुमन्त्रणादि स्यात्तत्तु नैष्कर्म्य केवल ।
> अथ सम्पन्नवचन विप्राणाम् विसर्ज्जनम् ॥ इति ।

---

* उपास्मै गायता नर पवमानायेन्दवे । अभिदेवाँ इयक्षते ॥ ६२ ॥
ये त्वाहिहत्ये मघवन्नवर्द्धन्ये शाम्बरे हरिवो ये गविष्टौ ।
ये त्वा नूनमनुमदन्ति विप्रा पिबेन्द्र सोमं सगणो मरुद्भि ॥ ६३ ॥
जनिष्ठा उग्र सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमान ।
अवर्द्धन्निन्द्र मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ ६४ ॥
आ तू न इन्द्र वृत्रहन्नस्माकमर्द्धमा गहि । महान् महीभिरूतिभि ॥ ६५ ॥
त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा असि स्पृध ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य्य तरुष्यत ॥ ६६म ३३अ यजु ।

† अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मतीयोजा न्विन्द्र ते हरी ॥ ५१म ३अ यजु ।

तथा बहुमातृकस्यापि पिण्डमेकमेव ।

अनेका मातरो यस्य वृद्धिश्राद्धे महालये ।
अर्घ्यदानं पृथक् कुर्यात् पिण्डमेकन्तु निर्वपेत् ॥

इति लौगाक्षिवचनात् ।

तथा ।

पितृवर्गे मातृवर्गे तथा मातामहस्य च ।
जीवेत् स यदि वर्गाद्यस्तद्वर्गन्तु परित्यजेत् ॥

इति वचनाद्यदि वर्गाद्यः सम्पूर्णो वर्गो वा जीवति तदा वृद्धि-श्राद्धादौ तद्वर्गस्त्याज्यः । तथा पिण्डदानमपि विकल्पेनोक्तं वृद्धिश्राद्धे ।

पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।

इति भविष्यपुराणवचनात् ।

आमश्राद्धं पिण्डवर्ज्ये वृद्धौ नान्दीमुखे सदा ।

इति वृद्धयाज्ञवल्क्यवचनाच्च । अपिण्डकं वृद्धिश्राद्धमनग्निकविषय-मिति केचित् ।

यावज्जन्माग्निसम्बन्ध उत्सन्नाग्निस्तथैव च ।
तावद्वृद्धिषु सर्वासु सङ्कल्पमात्रमाचरेत् ॥

इति वृद्धमनूक्तेः ।

सङ्कल्पश्राद्धे विशेषमाह लौगाक्षिः ।

सङ्कल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनं न चैवार्घ्यं नाग्नौकरणमेव च ।
विकिरं पिण्डदानञ्च श्राद्धे सङ्कल्पसंज्ञि(ति)तम् ॥ इति ।

अत्र जीवत्पितृकस्य विशेषमाह मनुः ।

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।

येभ्य एव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः ॥ इति ।

अस्यार्थः । पितृकर्तृके कर्मणि वृद्ध्यादौ यदि पितृप्रतिनिधित्वेन पुत्रस्य कर्तृत्वं तदा पितृपितामहादय एव यष्टव्याः न तु स्वमातृमातामहादय इति । स्वकर्तृके स्वपत्नीनिषेकादिकर्मणि तु पितरि जीवत्यपि स्वमातृमातामहादिभ्यो दद्यात् ।

पितरो जनकस्येष्टा यावद्व्रतमनाहितम् ।

समाहितव्रतः पश्चात् स्वान् यजेत पितॄन् सदा ॥

इति वृद्धयाज्ञवल्क्योक्तेः । समाहितव्रतः समाप्तब्रह्मचर्य्य इत्यर्थः ।

तत्रापि प्रथमविवाहे न स्वस्य कर्तृत्वमित्याह सायनाचार्य्यः ।

नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः ।

अत ऊर्द्ध्वं प्रकुर्व्वीत स्वयमेव तु नान्दिकम् ॥ इति ।

कात्यायनोऽपि ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।

पिण्डानोद्वहनात्तेषां त(द)स्याभावे तु तत्क्रमात् ॥

अत्र पिण्डशब्दः श्राद्धपरः । ओद्वहनादित्यत्र अभिविधावाङ् । ततश्च स्वापत्यस्य गर्भाधानादिप्रथमविवाहान्तसंस्कारेषु पिता स्वपितृभ्यः श्राद्धं दद्यात् । तस्य पितुरभावे तु तत्प्रतिनिधिपितृव्यादिस्वतुल्यादेर्जातकर्म्मादिविवाहान्तसंस्कारेषु तेषां संस्कार्य्यपित्रादीनामेव क्रमेण दद्यात् । पितुर्भ्रात्राद्यभावे तु संस्कार्य्यस्य भ्रात्रादिभिरपि स्वपित्रादीनामेव दातव्यम् ।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः ।

इति स्मरणात् । समावर्त्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वाज्जीवत्पितृकस्य समावर्त्तने पिता स्वपितृभ्यो दद्यात् । अजीवत्पितृकस्तु पूर्व्वसंस्कृतभ्रातृसम्भवेऽपि स्वयमेव स्वपितृभ्यो दद्यात् । उपनीतत्वात् कर्म्माधिकारस्य जातत्वादिति ।

यदा चेज्जीवत्पिता तदा विशेषमाह छन्दोगपरिशिष्टे ।

जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्य्यात् तस्यां जीवन्त्यां मातामहस्यैवेति ।

येभ्य एव पिता दद्यादिति तु साग्निविषयम् ।

न जीवतः पितुः कुर्य्याच्छ्राद्धमग्निमृते द्विजः ।
(ए)येभ्य एव पिता दद्यात्तेभ्यः कुर्व्वीत साग्निकः ॥
पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्व्वीत जीवति प्रपितामहे ॥

इति सुमन्तुवचनात् ।

इति श्रीमद्विधानपारिजाते तृतीयस्तवके वृद्धिश्राद्धनिर्णयः ।

## अथ वरस्य कन्यागृहं प्रति गमनविधानम् ।

तत्र शौनकः ।

पुण्ये मुहूर्त्ते कुर्व्वीत विवाहं विधिवद्द्विजः ।
कृताभ्युदयिकं श्राद्धं कुर्य्यात् स्वस्ति च वाचयेत् ॥

अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ।
भूषितो गन्धमाल्याद्यैः शकुनेन समन्वितः ॥
ब्राह्मणान् भोजयित्वान्ते कृतपुण्याहवाचनः ।
कृतकौतुकबन्धश्च मित्र(बन्ध्वादि)बान्धवसंयुतः ॥
यानं यथार्हमारुह्य यातव्यं च वधूगृ(हे)हम् ।
तस्य द्वाराद्बहिः स्थित्वा श्वश्रुस्तोऽभिमुखागतैः ॥
गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः ।
कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः ॥ इति ।

वधूवरभोजनविषये बौधायनः ।

स्नातो भुक्तवान् प्रतीक्ष्यापरपदातिर्गत्वा बन्धुज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां वधूं समीक्षेत इति ।

व्यासोऽपि ।

भुक्त्वा* समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजातये ॥ इति ।

शाङ्खोऽपि ।

पूर्वेद्युः स्वस्तिवाचनं नान्दीश्राद्धं समाचरेत् ।
भुक्त्वा निःशङ्कि पूर्वाह्णे उद्वहेदिति सर्वदा ॥

इति कन्यागृहगमनविधानम् ।

---

* भुक्त्वेति मधुपर्कैकदेशभोजनपरमिति निबन्धारः ।

अथेदानीं गृहमागताय वराय कन्यादात्रा मधुपर्क-
विधानेन पूजा कार्य्या ।

तथा चाश्वलायनगृह्यम् ।

ऋत्विजो वृत्वा मधुपर्कमाहरेत् स्नातकायोपस्थितायेति ।

कात्यायनगृह्यमपि ।

षडर्घ्या भवन्ति आचार्य्य ऋत्विग्वैवाह्यो राजा प्रियः
स्नातक इति ।

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि* ॥ इति ।

एवं स्वस्वगृह्योक्तप्रकारेण मधुपर्कविधिना अर्च्चिताय वराय कन्या-
दानमभिधीयते ।

तथाच शौनकः ।

नानाविधा जनपदा ग्राम्याश्चोद्वाहकर्म्मणि ।
क्रियन्ते लौकिका धर्म्मास्तेषु स्वकुलपूरुषैः ॥
पूर्व्ववत्तु हिताम् कृत्वा कुर्य्याद्दारपरिग्रहम् ।
सर्व्वसाधारणं कर्म्म तत्तु तावदिहोच्यते ॥
तत्र प्रदेशे कस्मिंश्चित्तदभ्युपरिकल्पिते ।
विष्टरे† प्राङ्मुखः सम्यगासित्वा वरणी स्वयम् ॥

---

* अत्र वरदातृभ्यां शाखिनाविषयेऽपि यदीयु [illegible] मधुपर्क इति [illegible] शाखी तच्छाखया मधुपर्कं प्रति याज्ञिका [illegible] । इति निर्णयसिन्धुः ।

† पञ्चाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः । [illegible] ।

प्रक्षाल्याचम्य च कृतप्राणायामः समाहितः ।
उपलिप्य तयोर्मध्ये स्थण्डिलेऽग्निं निधाय च ॥
पश्चादग्नेः प्रतिष्ठाप्य पेषणीमश्मनिर्म्मिताम् ।
प्रागुत्तरेऽग्ने संस्थाप्य पूर्णकुम्भमथो वरः ॥
उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतोऽनलात् ।
तद्दानोमात्मना दत्तं नूतनं वसनद्वयम् ।
वसित्वाचान्तसलिलां भूषितां कुसुमादिभिः ।
पश्चात्प्रक्कुशको ब्रह्मा तदर्थेन तु विष्टरः ॥
कार्य्येऽस्मिन् भवेद्ब्रह्मा सम्बन्धेऽयस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥
प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमीपतः ।
कन्यकां प्रतिष्ठ्य स्त्रीयादृतां पित्रादिभिर्वरः ॥
कन्यादानप्रकारस्य पूर्व्वाचरित उच्यते ।
वरस्याभिमुखं स्थित्वा कन्यायाः प्रतिपादकः ॥
चतुर्थ्यन्तं वरस्योक्ता नाम तद्गोत्रपूर्व्वकम् ।
ततः सहत्वकर्म्मभ्य इत्युचार्य्य ततः परम् ॥
पाद(गामिनि,गामिति चोच्चार्य्य प्रीतिपूर्व्वं ततः परम् ।
वरस्य हस्ते यो दद्याद्देवतीर्थेन शास्त्रधीः ॥
तद्यथा गार्ग्यगोत्राय परमेश्वरशर्म्मणे ।
आत्रेयगोत्रप्रभवां पार्व्वतीं प्रददाम्यहम् ॥
कन्यां सहत्वकर्म्मभ्यः करोमि प्रतिपादिताम् ।
कन्यकादानकर्म्मैवमाचरन्ति मनीषिणः ॥

विभवानुगुणं दैवं सुवर्णरजतादिकम् ।
सर्व्वं विहित(मन्त्रेण)मत्रैव काले दद्यात्सहोदकम् ॥

तिष्ठन् कन्यादानं कुर्य्यात् । तदुक्तं बृहस्पतिना ।

चतुष्पादं गृहं कन्यां दासीं छत्रं रथं तथा ।
तिष्ठन्नेतान् द्विजो दद्याद्भूम्यादीनुपविश्य च ॥
ततो मङ्गलसूत्रञ्च ध्यायन्निष्टाञ्च देवताम् ।
बद्ध्वा कण्ठे प्रदेशेऽस्या भूषणानि च शक्तितः ।
कन्यकां प्रतिगृह्णीयं वरः पूर्व्ववदासने ॥ इति ।

अत्र शौनकोये अग्निं प्रतिष्ठाप्य पश्चात् वरः पाणिं गृह्णीयादिति यदुक्तं तत्तु वाजसनेयादिविषयम् । तच्छाखाप्रवर्त्तककात्यायनाचार्य्येण जवृतावोक्षिते अग्निमुपसमाधाय निर्मथ्य विवाह उदगयन आपूर्य्यमाणपक्षे कुमार्य्याः पाणिं गृह्णीयादिति सूत्रप्रणयनात् । आश्वलायनादीनान्तु पाणिग्रहणानन्तरमग्निस्थापनं वेदितव्यम् । पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपुरस्तादुदकुम्भं निधाय समन्वारब्धायां जुहोति सूत्रात् ।

आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च ।
उपलेपादि कुर्व्वीत हविर्भुक्स्थापनान्तकम् ॥

इति कारिकाकारमताच्च ।

नारदः ।

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्य्यात्तालवत्ताम्रपात्रं तद्दशभिः पलैः ॥
ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाथवा शुभे ।

मण्डलार्द्धोदयं वीक्ष्य रवेस्तत्र विनिश्चिनुयात् ।
मुहूर्त्तं मङ्गले मान्त्री यन्त्रच्छायादिनाथवा ॥ इति ।

अथ सुमुहूर्त्तसमये विशेषोऽभिहित आश्वलायनकारिकायाम् ।

स्नातालङ्कृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः ।
ईक्षेत तण्डुलस्थाया वरस्तस्य मुखञ्च सा ॥
मुहूर्त्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः ।
सगुडां जीरकां कन्यां वरयेदथ तां वरः ॥ इति ।

तण्डुलप्रक्षेपणमुक्तं यमस्मृतौ ।

आवह्न तण्डुलप्रस्थमीक्षेत्प्रत्यङ्मुखो वधूम् । इति ।

अथ कन्यादानप्रकार उक्तः छन्दोगपरिशिष्टे । यथा ।

अनु(प्रादे)प्रदे गोसरप्रदे हरितदर्भास्तीर्णे भद्रपीठे वरः प्राङ्मुख उपविशेत्तस्य पुरस्तात् प्रत्यङ्मुखी भद्रपीठासीनां सुस्नाता-मलङ्कृतामाहतवाससम्† स्रग्विणीं कन्यां पुरस्कृत्य दाता सामान्य-उपविशेद्वरं विधिवद(र्हयेत्)भ्यर्चयेच्च । अथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य तैजस-मयं पूर्णं कलसं निधाय व्रीहियवानोप्य तं गन्धादिभिरलङ्कृत्य दूर्वा(म्र)पल्लवैर्मुखमवस्तीर्य अब्लिङ्गाभिः*ऋग्भिरभिमन्त्र्य ताभि-रद्भिः प्रयोजयेत् ।

---

* निक्षेपमन्त्रो यथा— मुख्यो त्वमसि यज्ञानां ब्रह्मणा निर्मितः पुरा ।
अत आवाह्य दम्पत्योः कार्यसाधनकारणम् ॥ इति निर्णयसिन्धुः ।

† आहतवासोलक्षणं यथा—ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम् ।
आहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥
ईषत् शुभ्रं, न धारितं न परिहितमिति रत्नाकरवचनम् ।

अथ दाता पुण्याहादीनि वाचयित्वा शिवा आपः सन्तु सौम-नस्यमस्तु अक्षतं चारिष्टञ्चास्तु दीर्घमायुरस्तु शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसम्पदस्तु इत्युक्त्वा भार्य्यादिसमेतः सङ्कल्प-यथाकामसुखार्थं कन्यां प्रतिगृह्य अमुकगोत्रो(त्रा)ऽहममुष्य प्रपौत्री-ममुष्य पौत्रीममुष्य पुत्रीं सुश्रीनाम्नीमिमां कन्यां अमुकगोत्री-(त्राय)ऽस्मै अमुष्य प्रपौत्राय अमुष्य पौत्राय अमुष्य पुत्राय शुभशीलनाम्ने अस्मै वराय सम्प्रददे कन्यां प्रतिगृह्णातु भवानिति ब्रुवन् वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिञ्चेत्। मनसा च प्रजापतिः प्रीयतामिति ब्रूयात्।

अथ वरः शिरसि पुण्याहाशिषो वाचयित्वा दक्षिणेंऽसे कन्यामभिमृश्य "क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविश कामेन त्वा प्रति-गृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वाददातु पृथिवी प्रतिगृह्णातु" इति जपित्वा प्रजापतिमनुस्मृत्य धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णा-मीति ब्रूयात्। एवं त्रिः प्रयुज्य पुरोधा दम्पती प्रति 'ऋतस्य हि शुरुधः सन्ति पूर्वी'रिति तिस्र ऋचो* जपित्वा एतद्वः सत्य-समृद्धमस्तु इति ब्रूयात्।

---

* ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः॥ ८॥
ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि।
ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः॥ ९॥
ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते॥ ऋ० ४म० २३सू० १०मन्त्र।

अथानयोर्निरीक्षणम् ।

स्वलङ्कृते वेश्मनि मङ्गलगीततूर्य्यनिर्घोषे पूर्व्वापराय(न्यु)त्यु-च्छ्रितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिका तिर-स्करिणी धारयेयुः । अथ पूर्व्वस्मिन् राशौ प्रत्यङ्मुखीं गुड-जीरकपाणिं कन्यां स्थापयेयुः । अपरस्मिन् प्राङ्मुखं तथाभूतं वरञ्च । तौ मनसा इष्टदेवतां ध्यायन्तौ समाहितौ (समायिकौ) तिष्ठेताम् । ब्राह्मणाः सूर्य्यसूक्तं* पठेयुः । पुरन्ध्रो मङ्गलगीतीः कुर्य्युः ।

अथ ज्योतिर्व्विदादिष्टे काले (प्रविष्टे) अपस्तिरस्करिणीमुद-गपसार्य्य कन्यावरौ परस्परस्मिन् गुडजीरका(नवकिरतः)नव-किरन्तौ परस्परं निरीक्षेयाताम् । अभ्रातृघ्नीमिति† तामीक्षमाणो जपत्वघोरचक्षुरपतिघ्न्येधीति‡ । समीक्ष(क्ष्य)माणोऽथास्या भ्रुवो-र्मध्यम् इदमहमिति§ दर्भाग्रेण परिमृज्य दर्भं निरस्य अप उप-स्पृशेत् । ततो मित्रोऽसीति वधूं दक्षिणहस्ते गृहीत्वा एकमिषम्¶ इति वेदिमुपनयेत् । अथ ब्राह्मणा बान्धवाः पुरन्ध्र्यश्च ता-वाशीर्भिरभिनन्दयेयुः ।

---

* उदुत्यमित्यादिक प्रथमखण्डस्य ४०७ पृष्ठे प्रदर्शितम् ।

† अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितः सुव ।

‡ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ १०म मण्डल् ८५सूक्त् ।

§ इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तां निर्दिशामि ।

¶ एकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे त्रीणि व्रताय विष्णुस्त्वान्वेतु । सम्प्रदायवशप्राप्तः ।

अथानयोरार्द्राक्षतारोपणम् ।

ब्राह्मणाः तैजसेन पाञ्चेण क्षीर(मानीय)मादाय घृतमासिच्य पुरन्ध्र्यादिभिः आर्द्राक्षततण्डुलानादाय तदारोपणरूप तया-स्थितयोर्वधूवरयोर्वर्धनकर्मैतत् कारयेयुः । अक्षतं क्षीरमाज्युघृतमरिष्टमक्षतान्याप एतेषामारोपणमिष्यते इति स्मृतात् । ततो वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जली क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विरक्षततण्डुलानञ्जलिना वपति यथापूर्वेण ततो द्विरुपरिष्टादभिघारयति एव वराञ्जलावप्यक्षततण्डुलापूरणं कुर्यात् । दाता तयोरञ्जल्योर्हिरण्यमवदधाति । अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेत् दाता च कन्या धारयतु दक्षिणाः पान्तु बहुदेयं चास्तु पुण्यं वर्धताम् शान्तिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्तनक्षत्रसम्पदस्तु इत्युक्त्वा कन्यामुत्थाप्य तदञ्जल्यक्षतान् वरमूर्ध्न्यारोपयेत् । वरोऽपि तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेत् । एवं त्रिर्वधूः पूर्वं वराञ्जलौ ततस्त्रिर्वरः वध्वञ्जलौ तण्डुलपूरणं कुर्यात् । तदञ्जलावन्योऽन्य तदक्षतारोपणं कारयेत् । इदानीं दाता वराय गोभूमिदासीयानशयनासनादिकमनुदानं दद्यात् ।

अथ पुरोधाः कांस्ये (पय) आप आसिच्य औदुम्बर्या आर्द्रशाखया अपलाशया सहिरण्यपवित्रया सदूर्वाग्रपल्लवया अभिषिञ्चेदप्लिङ्गाभिरद्भिः * ।

---

* आपो हि ष्ठा मयोभुव इत्यादिकाभिः, ब्रह्मकलशस्य ३८ पृष्ठे प्रदर्शिताभिः ।

अथ वधूवरौ मस्तिखरपुष्पं चोरहृतेनाघ्राय्य परस्परतिलकं कुरुत: कण्ठे स्रजं चामुञ्चत: कौतुकसूत्रं च परस्परं करे बध्नीयाताम् । अथ पुरोधास्तयोरुत्तरीयान्तयो: पञ्च पञ्च पू(गी)गफलानि विवाहग्रन्थरचितं गणाधिपमनुस्मृत्य गणानां त्वा गणपतिं हवामहे* इति आ तू न इन्द्र क्षुमन्तमिति च† वधूवरयोरुत्तरीयान्तौ च नीललोहितं भवतीति‡ मन्त्रेण बध्नीयात् ।

अथ दाता सभार्य्यो हृष्ट: पुरन्ध्रयो ज्ञातिबान्धवाश्च क्रमादाशीर्भिराद्रीक्षतारोपणं कुर्य्युरिति ।

अत्र कन्यानिरीक्षणदानादिषु गौनकण्ठद्वयपरिमिश्रयो: क्रमव्यत्ययो यत्र दृश्यते तत्र शिष्टा: प्रमाणम् ।

अत्र कन्यादानमन्त्रो वायुपुराणे यथा ।

कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि (लिच्छवे) विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
विश्वम्भ(र:)रा सर्व्वभूता: साक्षिण्य: सर्व्वदेवता: ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

---

* गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे । निधीनां त्वा निधिपतिꣳ हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ।
२३अ- १९म, यजुः ।

† आ तू न इन्द्र क्षुमन्त चित्रं ग्राभं संगृभाय ।
महाहस्ती दक्षिणेन ॥ ८म- ८१सू- १ऋक् ।

‡ नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातय: पतिर्बन्धेषु बध्यते ॥ १०म- ८५सू- २८ऋक् ।

अथ प्रार्थनामन्त्रौ ।

कात्यगृह्यः ।

गौरीं* कन्यामिमां विप्र यथाशक्तिविभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥

व्यासोऽपि ।

कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ इति ।
दासीदासासनाद्यंश्च भूषणानि गृहं (ततः) तथा ।
धान्यानि च धनञ्चापि तथान्यानि प्रदापयेत् ॥

इति विवाहोत्तरमनुदानान्युक्तानि ।

अथ कन्यादानाङ्गभूतानुदानमन्त्राः प्रोच्यन्ते ।

यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी† ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

इति गोः ।

सर्वेषामाश्र(या)यो भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे ॥

इति भूमेः ।

इयं दासी मया तुभ्यं श्रोत्रिय प्रतिपादिता ।
सदा कर्मकरी भोग्या यथेष्टं भद्रमस्तु ते ॥

---

* अनर्घाविंशां तु गौरीमितिपदस्थाने नग्निकां निवेशनीयम्, अधिकवार्षिक्यां च रोहिणीमित्यादिकं कार्यं इति गोपीनाथः ।

† यज्ञसाधनभूतो यस्य सर्वाघनाशिनो इति संस्काररत्नमालायां पाठः ।

इति दास्याः ।

विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।
चन्द्रार्कवाह(नो)न नित्यमतः शान्तिं प्रयच्छ मे ॥

इत्यश्वस्य ।

अशून्यं शयनं यस्मादनूनां श्रियमुत्तमाम् ।
सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ॥

इति शय्यायाः ।

हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम् ।
सर्व्वप्रदं प्रदास्यामि प्रीणातु कमलापतिः ॥

इत्यङ्गुरीयकस्य ।

क्षीरोदमथने पूर्व्वमुत्थितं कुण्डलद्वयम् ।
श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति ॥

इति कुण्डलस्य ।

इदं गृहं गृहाण त्वं सर्व्वोपस्करसंयुतम् ।
तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥

इति गृहस्य ।

अत्र विभवे सति अन्यान्यपि दातव्यानि तान्यन्यानि चतुर्थ-स्तवके वक्ष्यन्ते ।

कन्यादानफलमुक्तं ब्राह्मे ।

कन्यान्तु परया भक्त्या ह्यलङ्कृत्य प्रयत्नतः ।
कुलीनाय सुरूपाय गुणज्ञाय विशेषतः ।
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः ॥

लैङ्गेऽपि ।

कन्यादानं प्रवक्ष्यामि सर्व्वदानोत्तमोत्तमम् ।
यद्दत्वा सर्व्वदानानां फलं प्राप्नोति मानवः ॥
महीदाताश्च गोदाताः कन्यादाताश्च ये तथा ।
कन्यादानानुगाः पश्चात् समं यान्ति नयो रथाः ॥

शङ्खलिखितरपि ।

सहस्रमिव धेनूनां शतं चा(नु)नडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं (च) न तत्समम् ।
तस्मात्सर्व्वप्रदानेभ्यः कन्यादानं विशिष्यते ॥

मनुरपि ।

अग्निहोत्रादिभिर्यस्याहोत्राती ब्राह्मणस्य च ।
तत्कन्यां विधिवद्दत्वा फलमाप्नोति मानवः ॥

स्कान्देऽपि ।

वैवाहिकप्रदानं (वो) वा यो दद्याच्च नरोत्तमः ।
विमानेन विचित्रेण किङ्किणीजालमालिना ।
महेन्द्रभवनं याति वीज्यमानोऽप्सरोगणैः ॥

संवर्त्तोऽपि ।

अलङ्कृत्य तु यः कन्यां भूषणाच्छादनादिभिः ।
दद्यात्स्वर्गं (स चा) समाप्नोति पूज्यते वासवादिभिः ॥
कूकुद(कूपद)वाजमेधौ च प्राणदाता भयेषु च ।
समं यान्ति रथा येषां नयो वै नात्र संशयः ॥

कुकुदः (कूपद) इति सालङ्कारकन्यादातेत्यर्थः। सत्कृत्यालङ्कृतां कन्यां यो ददाति स कुकुद (कूपद) इत्यभिधानात् ।

आग्नेयेऽपि ।

> कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम् ।
> ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
> श्रुत्वा कन्याप्रदानस्य पितरः प्रपितामहाः ।
> विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥
> तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः ।
> वर्षान्ते गृह्णाति तस्य तिलो राशिषु यावता ।
> संक्षयं लभते* तावद्ब्रह्मलोकोऽस्य निश्चितम् ॥
> यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
> तावद्वर्षसहस्राणि ब्रह्मलोके महीयते† ॥ इति ।

अत्रिः ।

> वालुकाभिः कृतो राशिर्यावत् सप्तर्षिमण्डलम् ।
> गते त्रयसहस्रे‡ तु एकमेकं विशीर्य्यते ।
> क्षयश्च दृष्टस्तस्यापि कन्यादाने न विद्यते§ ॥

---

* न क्षयं लभते इति पाठ युक्ततरस्तस्मात् ।

† महो ईयते इति पदद्वयमिति व्याख्या, एकपदत्वे तु महीयते इति रूप स्यात् ।

‡ त्रयया मनया कल्पान्त्य प्रसर्वः तेषां सहस्र तस्मिन् ।

§ कन्यादानजन्यपुण्यस्य इति शेष. ।

संवर्त्तः ।

ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् ।
प्राप्नोति कन्यकां दत्त्वा होममन्त्रैश्च संस्कृताम् ॥ इति ।

अथ दम्पतिकर्त्तव्यमुच्यते ।

यदाह कात्यायनः ।

सवर्णायास्तथा पाणिं गृहीत्वा विधिवद्वरः ।
संपूज्य प्रार्थयित्वा तां शची देवीं गुणाश्रयाम् ॥
त्रैलोक्यवल्लभां दिव्यगन्धमाल्याम्बरा(ड्वि)न्विताम् ।
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ॥
एवंविधां कुमारीस्तु पूजान्ते प्रार्थयेत्ततः ।
कात्यायनीच पश्चाच्च गौरीमेवं प्रपूजयेत् ॥ इति ।

एवं गौरीं संपूज्य वरो मङ्गलसूत्रं वधूकण्ठे स्वेष्टदेवतां ध्या(त्वा)यन् बध्नीयात् ।

तत्र मन्त्रः स्मृतिरत्ने ।

माङ्गल्यतन्तुनानेन भर्तृजीवनहेतुना ।
कण्ठे बध्नामि सुभगे सा जीव शरदः शतम् ॥ इति ।

अस्मिन् समये वरो वधूं स्वकीयवस्त्रालङ्कारभूषणैर्भूषयित्वा पूर्वोक्तां विवाहवेदिकामागत्य स्वयमासनमध्यास्य पश्चिममार्गेण नियमितवाचं वधूमानीय दक्षिणतस्तामुपवेश्य स्वस्वगृह्योक्तमार्गेण विवाहहोमं कुर्यात् ।

तथाचाश्वलायन ।

अर्धरात्रे व्यतीते तु परेद्युः प्रातरेव हि ।
गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुः ॥　इति ।

अथ व्रतविशेषमाह शौनकः ।

अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा ।
शक्तिं वीक्ष्य तथाब्दं वा चरेतां दम्पती व्रतम् ॥

व्रतमाह स एव ।

अक्षारलवणाहारौ भवेतां भूतले तथा ।
शयीयातां समावेशं न कुर्यातां वधूवरौ ॥

समावेशो मैथुनम् ।

व्रते समाप्ते वध्वा च विवाहसमये धृतम् ।
वस्त्रं दद्यात्सतत्त्वज्ञे ब्राह्मणाय विपश्चिते ॥
सूर्यानाम्नीर्ऋचो*ऽध्येति शब्दार्थज्ञस्तथा च यः ।

---

* सूर्या सप्तर्च्यात्मकसूक्ता । यथा—

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥ १ ॥
सोमेनादित्या बलिनः सोमेन पृथिवी मही ।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥
सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥ ३ ॥
आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥ ४ ॥
यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥

विहितो तोरस्च(स्तो)त्र नैन्द्रमित्याद्यथो पुरा ।
अश्रीरान्ता इत्थेषन्ते सूर्याशब्देन सूरिभिः ।
ब्राह्मणान् भोजयित्वा तैः पुण्याहमथ वाचयेत् ॥ इति ।

---

नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १९ ॥
सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥
उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे ।
अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २१ ॥
उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।
अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज ॥ २२ ॥
अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् ।
समर्यमा सं भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवाः ॥ २३ ॥
प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात् सविता सुशेवः ।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ २४ ॥
प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ २५ ॥
पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥ २६ ॥
इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं संसृजस्वाधा जिव्री विदथमा वदाथः ॥ २७ ॥
नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ २८ ॥
परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्व्या जाया विशते पतिम् ॥ २९ ॥
अश्रीरा तनूर्भवति रुशती पापयामुया ।
पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सते ॥  १०म ८५सू ३०ऋक् ।

अथ चतुर्षु दिवसेषु कर्त्तव्यविशेषमाह स एव ।

दम्पती रोहिणीसोमौ भूत्वा प्रथमके दिने ।
दाक्षायणीं यजेयातां द्वितीये दिवसेऽपि तौ ॥
पूजयेतां महादेवौ गन्धर्व्वाप्सरसौ च तौ ।
अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ।
चतुर्थ्यां तौ यजेयातां माहरीं माधवश्रियौ ॥
एवं प्रतिदिनं (कर्त्तुं) कृत्वा पूजां तौ दम्पती तथा ।
चतुर्थ्यन्तेषु दिवसेष्वर्च्चयेद्ब्राह्मणान् बहून्* ॥
घृतहेमादिमिष्टान्नं ताम्बूलादि प्रयत्नतः ।
आशीर्व्वादैर्बहुभिश्चतुर्व्वेदोदितैर्द्विजैः ॥

अथ दम्पतिसहभोजने संग्रहकारः ।

भ्राता सहोपनीतैः स्यादिवाहे भार्यया सह ।
अन्यत्र सह (भुञ्जीत) भुञ्जानः पातित्यं प्राप्नुयान्नरः ॥

तथा नान्दीश्राद्धमारभ्य मातृकाविसर्ज्जनावधि वर्ज्यमुक्तं संग्रहे ।

नित्यश्राद्धमध्ययनं स्नानं शीतेन वारिणा ।
जाते श्राद्धिके नैव मण्डपोद्वासनावधि ॥

वृद्धमनुः ।

अपसव्यं स्वधा(पाथं)कारं शीताद्भिः स्नानमेव च ।
सपिण्डा नैव कुर्व्वीरन् यावन्मातृविसर्ज्जनम् ॥

ये वा भद्रं दूषयन्ति स्वधाभिरिति मन्त्रलिङ्गाच्च नित्यश्राद्धादौ स्वधाकारनिषेधः ।

---

१ * अश्नन्तौ विप्रान् भक्षन् इति पाठो युक्तः, कर्त्तृविशेषणत्वात् ।

विवाहसमये प्राप्ते यद्देहे स्त्र(त)त्युजन्मनो ।
स्नाता तदा पुनश्चैव शुद्धे काले समाचरेत् ॥

इति वचनाच्च ।

केचित्तु वर्णाचरिमध्य गुरुमृताशौचविषयमेतत् अन्यत्र सामान्याशौचे नान्दीश्राद्धादूर्ध्वमाशौचाभावादित्याहुः ।

तस्य दोषस्य शान्त्यर्थं पुनर्वा प्रतिमिष्यते ।
अयनं चोत्तरं श्रेष्ठं हृदये तु* विशेषतः ।
आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषा शुभावहाः ॥
विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजाः ।
करणयोगमुहूर्तानि ग्रहगोचरयोगगाः ॥
तस्मिन् (वो) विवाहसमये शुभमत्र तथैव च ।
पूर्वाह्णे पूर्वरात्रे च विवाहः शुभदो भवेत् ॥ इति ।

अत्रत्योऽन्यो विशेष सगोत्रादिविवाहप्रायश्चित्तविधाने द्रष्टव्यः ।

अथ द्वितीयविवाहविधानम् ।

तत्र श्रुतिर्यथा ।

तस्मादेको बह्वीर्जाया वि(न्दे)न्दत इति ।

श्रुत्यन्तरमपि ।

तस्मादेकस्य बह्वो जाया भवन्ति नैकस्यै बहवः सहपतय-
इति ।

---

* सर्वेषु विशेषत इति ख पुस्तके पाठः ।

तद्विषयमाह आपस्तम्बः ।

> धर्म्मप्रजासम्पन्ने दारे* नान्यां कुर्व्वीत अन्यतराभावे कार्य्या प्रागग्न्याधानादिति† ।

अस्यार्थः । यदि प्रागूढा स्त्री धर्म्मेण प्रजया च सम्पन्ना तदा नान्यां विवहेत् । अन्यतराभावे अग्न्याधानात् प्रागुद्वोढव्या इति । जन्मना ह वै पुरुषस्त्रिभिर्ऋणवान् जायते इति नापुत्रस्य लोकोऽस्तीति च श्रुतिः ।

स्मृतिश्च ।

> अपुत्रः सन् पुनर्दारान् परिणीय ततः पुनः ।
> परिणीय समुत्पाद्य नो चेदापुत्रदर्शनात् ।
> विरक्तश्चेद्वनं गच्छेत् संन्यासं वा समाश्रयेत् ॥

---

* अन्य दारे इतीति वचनान्मृते सवित् प्रागग्न्याधानात् सत्यामपि पुत्रसम्पत्तौ धर्म्मसमाप्त्यै पुनर्दारपरिग्रहः कर्त्तव्यम् ।

तथाच [illegible] ।

> भार्य्यायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि ।
> पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च ॥

याज्ञवल्क्योऽपि ।

> आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् । इति योगीश्वरः ।

† प्रागग्न्याधानात् सत्यामपि धर्म्मप्रजासम्पत्तौ रागान्धस्य कदाचिद्दारग्रहणे नातीव दोषः । यथाविहितार्थभार्य्या कार्य्येषु श्रद्धयाऽऽसक्ता वा न भवति पुत्राय मृता अनुत्पन्ना वा तदा कर्त्तव्य एव विवाह इति व्याख्यातमुज्ज्वलाख्या ।

याज्ञवल्क्यः ।

सुरापी* व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।
अधिविन्नापि भर्त्तव्या महदेनोऽन्यथा भवेत् ॥

अधिवेत्तव्या तदुपरि स्त्र्यन्तरं कर्त्तव्यमित्यर्थः ।

अधिवेदने प्रतीक्षाकालमाह मनुः ।

वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

संवर्त्ते तु ।

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्† ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥ इति ।

स्मृतिभास्करेऽपि ।

व्याधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्त्तवा ।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः ॥

तीर्थतो योनितः । धर्मकार्ये तु सहायभूता भवत्येव ।

सहिताया विशेषमाह स एव ।

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः ।
सानुज्ञाप्याधिवेत्तव्या नावमान्या तु कर्हिचित् ॥ इति ।

---

* सुरापाने नाधिवेदनमात्रं किन्तु त्यागोऽपि "तथा भवति पातकी" इति व्यासोक्तेन तस्य पृथगभिधानात्, "पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत्" इति वचनाच्च ।

† भर्त्तुरधिविन्देत् न तु भोग सर्वमिति आपस्त ।

स्मृत्यन्तरेऽपि।

एकामुत्क्रम्य कामार्थमन्यां (लब्धुं) वोढुं य इच्छति।
समर्थस्तोषयित्वार्थैः पूर्व्वोढामपरां वहेत्॥

याज्ञवल्क्यस्तु।

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियै॥ इति।

सधनेन सद्रव्यस्तृतीयांशो देयः। निर्धनेन ग्रासाच्छादनादि देयमित्यर्थः।

या तु उक्तद्रव्यापरितोषादिना गृहान्निर्गच्छेत् तां प्रत्याह मनुः।

अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा* कुलसन्निधौ॥ इति।

पत्नीबहुत्वे विशेषमाह कात्यायनः।

अग्निशिष्टादिशुश्रूषां बहुभार्य्यः सवर्णया।
कारयेत्तद्बहुत्वे चेज्ज्येष्ठया गर्हिता न चेत्॥ इति।

अस्यार्थः। अग्निशुश्रूषा श्रौतस्मार्त्ताग्निसाध्यकर्म। शिष्टशुश्रूषा अतिथिपूजादिका। पत्नीसहायसम्पाद्यं यत्तदेतत् सर्व्वं सवर्णासवर्णभार्य्यासमुदायवान् सवर्णभार्य्यया कारयेत्। अनेकसवर्णभार्य्यायुक्तस्तु ज्येष्ठया सवर्णया कारयेत् यदि सा गर्हिता

---

* त्याज्या वा इत्यत्र न त्याज्या इति मन्वर्थमुक्तावल्यां पाठः, स एव समीचीनतया प्रतिभाति।

न स्यात् । गर्ह्यमन्दोऽथ धर्म्यायोग्यत्वोपपादकदोषोपलक्षकः । ते च दोषा अन्धत्वकुष्ठित्वादयः ।

इदमग्न्याधा(न)ने सहाधिकृतानेकभार्याविषयम् । अनधिकृतायास्तु प्रसक्त्यभाव एव । तथापि केवलकालत्रयमाध्याधेयादि यजमानोऽनुम्बरीसमानवर्णैकयैव सवर्णया ज्येष्ठया कारयेत् । पत्नीसन्नहनादिकं कर्तुः संस्कारन्तु सहाधिकृताभिः सर्वाभिरित्यादि मीमांसासारवेदिना सुज्ञानम् । स्मार्त्ताग्निसाध्ये तु कर्म्मणि सर्व्वासां सहाधिकारः । प्रथमविवाहाग्न्यावेशापरविवाहहोमविधानात् । तदसम्भवेऽग्निद्वयसंसर्गविधानाच्च* ।

तथाच कात्यायनाश्वलायनौ ।

> सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात् ।
> यदीच्छेदग्निमान् कुर्व्वन् क्व होमोऽस्य विधीयते ।
> स्वेऽ(स्वा)ग्नावेव भवेद्धोमो लौकिके न कदाचन ॥ इति ।

---

* तद्विधानं यथा—यस्याग्नीन् गृह्यसोमौ सपत्नीभिरनातयी ।
सहाधिकारसिद्धार्थमक यथाग्नि योजक ॥
कुर्वीताग्नुहरेदग्नौ धर्मेणाधधात् स्वयम् ।
द्वौ तत्र विवाहे च प्रथमे तु परीक्षणे ।
पृथक् स्थण्डिलयोरपि समाधाय यथाविधि ॥
तम् ज्वलात्प्रसाधान्नमन्वाधानादिकं ततः ।
जुहुयात् पूर्वपत्नी तयाग्न्यारम्भे चाहुती ॥
पश्चाद्देशो यदि भूता दग्ध्वा विधेन वा पुन ।
चाद्दषोऽग्न्यन्यथा सार्वकाधानविधिना भवेत् ॥ इत्यादि ।

इदन्तु सति सम्भवे। ग्रामान्तरादावसम्भवे तु लौकिकाग्नौ विवाहहोमं कृत्वा तदनन्तरं भवदेवाद्युक्तप्रकारेण* पुनराधानं कार्य्यम्।

मृतपत्नीकस्य द्वितीयविवाहे कालविशेष उक्तः सङ्ग्रहे।

प्रमदामृतिवासरादितः
पुनरुद्वाहविधिर्वरस्य च।
विषमे परिवत्सरे शुभो
युगले चापि† मृतिप्रदो भवेत्॥ इति।

जीवन्त्यां पूर्व्वपत्न्यां द्वितीयादिविवाहे तु नायं कालनियमः।

इति श्रीविधानपारिजाते द्वितीयविवाहविधानम्।

अथ तृतीयमानुषीविवाहस्य निषिद्धत्वात्तस्मिन्
कर्त्तव्ये विवाहविधिरुच्यते।

तत्र तृतीयां निषेधति मात्स्ये कश्यपः।

अपाहत्य कर्यं चार्थं तृतीयां स्त्रियमुद्वहेत्।
पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निको(ऽज्वरः) नरः।

---

* तदुक्तप्रकारो यथा—

जायायां म्रियमाणायां द्वितीयामुद्वहेद्यदि।
तदा वैवाहिकं कर्म कुर्य्यादावसथोऽग्निमान्॥ इति।

† अक्षतेँ अपरिवेत्तारार्थक इति जीमूतनाथः।

उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ॥
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् ।
नश्यत्येव न सन्देहो गर्गस्य वचनं यथा ॥ इति ।

अन्यत्रापि ।

धर्म्मयागनिमि(त्तो)त्तेऽपि नोद्वहेन्मानुषीं स्त्रियम् ।
तृतीयां यदि चोद्वाहेत्* तर्हि सा विधवा भवेत् ॥
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ।
आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे ।
शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ॥

इत्यादि ब्रह्मपुराणे दर्शितम् ।

ग्रामात्प्राच्यामुदीच्यां वा सपुष्पफलसंयुतम् ।
परीक्ष्य यत्नतोऽधस्तात् स्थण्डिलादि यथाविधि ॥

व्यासः ।

स्नात्वाऽलं पूतवासास्तु रक्तगन्धादिभूषितः ।
सपुष्पफलशाखैकमर्कवृक्षं† समाश्रयेत् ॥
सप्तसूत्रेण संयुक्तमर्कं संस्थाप्य यत्नतः ।
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत् पुरा ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।

---

* उद्वहेदित्यर्थः, उद्वहेदित्यर्थे । निर्णयसिन्धावपि चायमेव पाठो दृश्यते ।

† वृक्षमित्यत्र गुल्ममिति च पुस्तके पाठः ।

नान्दीश्राद्धे हिरण्येन अष्टौ वर्गान्* प्रपूजयेत् ॥
पूजयेन्मधुपर्केण वरं (विप्रस्य हस्ततः) दाता तु यन्त्रितः ।
यज्ञोपवीतं वस्त्रे च हस्तकर्णादिभूषणम् ॥
उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ।
स्वशाखोक्तविधानेन† मधुपर्कं समाचरेत् ॥

ब्रह्मपुराणे यथाविधीत्यस्यानन्तरमुक्तम् ।

कृत्वार्कं पुरतस्तिष्ठन् प्रार्थयेत्तु द्विजोत्तमः ।
त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥
तमाध्यारोप्य देवेशं छायया सहितं रविम् ।
वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेण प्रपूजयेत् ॥

तन्मन्त्रेण आकृष्णेनेत्यादिना‡ ।

अन्यत्रापि ।

श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः ।

---

* अष्टौ मातृकादेवाश्च पितृवर्गास्तथा ।
गणेशदुर्गाक्षेत्रेशा कुलदेव्यष्टवर्गकाः ॥ इति स्मृतिदर्पणः ।

† स्वशाखा दातृशाखा इति केचित्, वरशाखेत्यन्ये ।
वरस्य या भवेच्छाखा तच्छाखाप्रयोगोदित" ।
मधुपर्कं प्रदातव्योऽन्यशाखीयेऽपि दातरि ॥
इति वचनात् एतदेव समीचीनं मन्यामहे ।

‡ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यंच ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

गन्धपुष्पैस्तथाभ्यर्च्य प्रवृलिङ्गैरभिषिच्य च ।
गुडौदनन्तु नैवेद्यं ताम्बूलञ्च समर्पयेत् ॥

व्यासः ।

अर्कं प्रदक्षिणीकुर्व्वन् जपेन्मन्त्रमिमं बुधः ।
मम प्रीतिकरा येयं मया सृ(सृ)ष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा सास्माक प्रतिरक्षतु ॥
पुनः प्रदक्षिणीकुर्य्यादभिमन्त्रेणानेन मन्त्रवित् ।
नमस्ते मङ्गले देवि मम. सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं मे इहागता* ॥
अर्कं त्वं ब्रह्मणा सृष्टः सर्व्वप्राणिहिताय च ।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः† ।
तृतीयोद्वाहज (दोष) पापं मृत्युञ्चाशु विनाशय ॥
आयुर्देहि यशो देहि प्रजां देहि पशूनपि ।
देहि मेऽर्क श्रियं पुष्टिं स्वस्थानेऽर्क स्थिरो भव ॥
ततश्च कन्यावरणे विपुलञ्च कुलमुच्चरेत् ।
आदित्य. सविता चार्कः पुत्रो पौत्रो च नप्तृका ॥
गोत्रं काश्यपमित्युक्त्वा लोके लौकिकमाचरेत् ।
सुमुहूर्त्ते निरीक्ष्यार्कं स्वस्तिसूक्त‡मुदीरयेत् ॥

---

* आपो हि ष्ठा इत्यादिभिरभिषेकमन्त्रैः प्रथमखण्डस्य ५८ पृष्ठे प्रदर्शितैः ।

† त्वं मे पत्नी इहागता इति ख पुस्तके पाठः ।

‡ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

आशीर्भिः सहितैः* कुर्य्यादाचार्य्यप्रमुखैर्द्विजैः ।
आचार्य्यञ्च समाहूय विधिना तन्मुखाच्च ताम् ।
परिगृह्य ततो होमं स्वगृह्यविधिनाचरेत् ॥

आचार्य्यस्य दानमन्त्रमाह व्यासः ।

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्म्मणे† तुभ्यं दत्तां विप्र समाश्रय ॥ इति ।
मङ्गलाक्षतकर्म्माणि कृत्वा कङ्कणबन्धनम् ।
यावत्पञ्चाहतं सूत्रं तावदर्कं प्रवेष्टयेत् ।
स्वशाखोक्तेन मन्त्रेण गायत्र्या वाथवा जपेत् ॥
पश्चीकृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः ।
बृहत्सामेति मन्त्रेण सूत्ररक्षां प्रकल्पयेत् ॥
अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ।
कुम्भांश्च निक्षिपेत् पश्चादाग्नेयादिचतुष्टये ॥
सवस्त्रं प्रतिकुम्भञ्च त्रिः सूत्रेणैव वेष्टयेत् ।
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् ॥
प्रतिकुम्भं महाविष्णुं सम्पूज्य परमेश्वरम् ।
पाद्या(र्घ्या)र्घादिनिवेद्यान्तं कुर्य्यान्नाम्नैव मन्त्रवित् ।

अत्र होमप्रकारः शौनकेन प्रदर्शितः ।

तृतीयस्त्रीविवाहे तु सम्प्राप्ते पुरुषस्य तु ।
आर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥

---

* आशीर्भिर्वर्द्धितैरिति गोपीनाथः ।

† अमुकगोत्रायामुकशर्म्मणे इति गोपीनाथः ।

अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीमुखं प्रकुर्व्वीत स्थण्डिलञ्च प्रकल्पयेत् ।
अर्कमभ्यर्च्य सौर्य्या च गन्धपुष्पाक्षतादिभिः ॥

सौरी सूर्य्यदैवत्या ऋक् चाकृष्णेनेत्यादिका । तयेत्यर्थः ।

स्वयं चालङ्कृतस्तद्वत् स्रङ्माल्यादिभिः शुभैः ।
अर्कस्योत्तरदिग्भागे समन्वारभ्य एतया ॥

एतया अर्कशाखया ।

उल्लेखनादिकं कुर्य्यादाघारान्तमतः परम् ।
आज्याहुतिञ्च जुहुयात् सं गोभिरनयैकया* ॥
यस्मै त्वा काम कामायेत्येतयर्चा† ततः परम् ।
व्यस्ताभिश्च समस्ताभिः‡स्ततश्च स्विष्टकृद्भवेत्§ ।
परिषेचनपर्य्यन्तमयाश्चेत्यादिकं क्रमात् ॥

अत्र प्रार्थनामन्त्रादिविशेषमाह व्यासः ।

पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदीरयेत् ।
मया कृतमिदं कर्म्म स्थावरेषु जरायुणा ।

---

* सं गोभिराङ्गिरसो नक्षमाणो भग इवेदर्य्यमणं निनाय ।
जने मित्रो न दम्पती अनक्ति बृहस्पते वाजयाशूंरिवाजौ स्वाहा ॥

† यस्मै त्वा काम कामाय वयं सम्राड्यजामहे ।
तमस्मभ्यं कामं दत्त्वाथेदं त्वं घृतं पिब स्वाहा ॥ इदमग्नये ।

‡ व्याहृतिभिरिति शेषः । ओं भूः स्वाहा इदमग्नये । ओं भुवः स्वाहा इदं वायवे । ओं स्वः स्वाहा इदं सूर्याय । ओं भूर्भुवः स्वः स्वाहा इदं प्रजापतये एतत्सर्वमपि ।

§ ततः स्विष्टकृत् पूर्वादिव पाठो बहुषु पुस्तकेषु दृश्यते ।

अर्कोपत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ॥
इत्युक्त्वा शान्तिसूक्तानि* जप्त्वा तं (तत्) विसर्ज्जयेत् ।
गोयुग्मं दक्षिणां दद्यादाचार्याय च शक्तितः ॥
इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः ।
तत्सर्वं गुरवे दद्यादन्ते पुण्याहमाचरेत् ॥

अथ पञ्चमदिने कर्त्तव्यमुक्तं ब्रह्मपुराणे ।

चतुर्थे दिवसेऽतीते पूर्व्ववत्तां प्रपूजयेत् ।
विसृज्य होममखिलं विधिना मानुषीं पराम् ॥
उद्वहेदन्यथा नैव पुत्रपौत्रादिहिंसनात् ।
न पश्यन्न च मित्राणि मङ्गलं नैव गच्छति ॥
एवमेव द्विजश्रेष्ठ विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिञ्च प्राप्नोत्यस्मिन् परत्र च ॥ इति ।

अथैषां वचनानामेकवाक्यतया सङ्क्षेपेण प्रयोगः प्रस्तूयते ।

तृतीयमानुषीविवाहस्य निषिद्धत्वात् तृतीयोऽर्कविवाहः कार्यः । पूर्व्वोक्ते चादित्यवासरे हस्तनक्षत्रे शनैश्चरे वा अन्यस्मिन् शुभदिने वा पूर्व्वाह्णे ग्रामात्प्राच्यामुदीच्यां वा फलपुष्पसंयुतार्कसमीपं गत्वा कृतनित्यक्रियो यजमानः प्राणानायम्य देशादिकं स्मृत्वा मम तृतीयमानुषीविवाहजन्य(दोषाभावार्थं)दोषपरिहाराय अर्कविवाहं करिष्ये इति सङ्कल्प्य अर्ककन्याप्रदानार्थमाचार्य्यं यथाविधि वृत्वा स्वस्तिवाचनं कृत्वा हिरण्येन नान्दीश्राद्धं कुर्य्यात् ।

---

* शन्नो, मान स्तोकादीनि, प्रथमखण्डस्य १२४ पृष्ठे प्रदर्शितानि ।

अथाचार्यः स्वगृह्योक्तविधिना मधुपर्केण वरं पूजयित्वा तस्मै यज्ञोपवीतं वस्त्रद्वयं हस्तकर्णादिभूषणं शिरोवेष्टनादिकञ्च दद्यात्। अथाचार्यो यजमानो वा सुवर्णनिर्म्मितां सूर्य्यप्रतिमामर्कांशस्य आकृष्णेनेति मन्त्रेण* षोडशोपचारैः† पूजयेत्। अर्कस्य प्रतिमायां वा गन्धपुष्पाक्षतादिभिः। इति वचनात्। तथा। श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः। संवेष्ट्य अर्कमिति शेषः। आपो हि ष्ठेत्यादिभिरब्लिङ्गकैर्मन्त्रैरभिषिच्य गुडौदनं नैवेद्यं दत्त्वा ताम्बूलं दक्षिणाञ्च सपुष्पाञ्जलिं दद्यात्।

अथार्कस्य पुरतस्तिष्ठन् प्रार्थनां कुर्य्यात्। तत्र मन्त्रौ।

त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु॥
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धन।
तृतीयोद्वाहजं पापं मृत्युञ्चाशु निवारय॥ इति।
अर्कस्य चोत्तरे देशे स्थण्डिलन्तु प्रकल्पयेत्।
उल्लेखनादिकं कृत्वा स्थापयेदनलं ततः।
कृत्वाज्यभागपर्य्यन्तं कन्यादानं ततः स्मृतम्॥

---

* १८ पृष्ठे द्रष्टव्येन।

† षोडशोपचारा यथा प्रयोगसारे—

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमनस्नानवसनाभरणानि च॥
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनम्।
प्रयोजयेदर्चनायामुपचारांश्च षोडश॥ इति।

विवाहदर्शं तु । ततो वरोऽर्कं प्रदक्षिणीकुर्य्यात् । तत्र मन्त्रः ।

मम प्रीतिकरा येयं (मया) पुरा सृष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा साऽस्माकं परिरक्षतु ॥

पुनरपि प्रदक्षिणं कुर्य्यात् । तत्रापि मन्त्रः ।

नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥ इति ।

पुनः प्रदक्षिणं कुर्व्वन् पुष्पाञ्जलिमपि क्षिपेत् ।

अनन्तरमाचार्य्यः अर्ककन्यादानमहं करिष्ये इति सङ्कल्प्य काश्यपगोत्रस्य अर्कस्य प्रपौत्रीं काश्यपगोत्रस्य सवितुः पौत्रीं काश्यपगोत्रस्यादित्यस्य पुत्रीमिमामर्ककन्यां यथाशक्ति विभूषितां प्रजापतिदेवताकां यथासम्भवगोत्राय अमुकस्य प्रपौत्राय अमुकस्य पौत्राय अमुकस्य पुत्रायामुकशर्म्मणे वराय तुभ्यं अमुकर्क्षे सम्प्रददे इत्युक्त्वा मन्त्रमिमं पठेत् ।

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्म्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति ।

अथ वरः कोऽदादिति मन्त्रं* गायत्रीं वा जपित्वा पञ्चाशतं† कुङ्कुमाक्तं सूत्रं स्कन्धेऽर्कस्य बध्नीयाद्व्यस्ततन्तुनानेनेति मन्त्रेण ।

---

* कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ७।४८ शुक्ल. यजु.।

† पञ्चाशन्निति ख पुस्तके पाठः।

अथ अक्षतारोपणकङ्कणबन्धनादि पूर्ववत् कुर्य्यात्।

अथार्कवृक्षस्य पूर्वाद्यष्टदिक्षु अष्टौ कुम्भान् स्थापयित्वा हरिद्रागन्धसंयुक्तशीतलजलेनापूर्य्य वस्त्रैः सूत्रैश्च प्रतिकुम्भं कण्ठेषु वेष्टयित्वा तत्र परमेश्वरं महाविष्णुं नाममन्त्रेणावाह्य षोड़शोपचारैः पूजयित्वा प्रार्थयेत्।

तत्र मन्त्रो यथा।

विश्वव्यापिन् नमस्तेऽस्तु भक्तप्रिय जनार्दन।

तुरीयस्य विवाहस्य अधिकारं प्रयच्छ मे॥ इति।

अथार्ककन्यया समन्वारब्धो देशादि सङ्कीर्त्य अर्कविवाहाङ्गभूतं होममहं तदङ्गतयाऽन्वाधानञ्च करिष्ये। अग्निमन्वाहिते-ऽन्वाधित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा अत्र प्रधानं बृहस्पति-मग्निं वायुं सूर्य्यं प्रजापतिञ्चैकैकया आज्याहुत्या आज्येन शेषेण स्विष्टकृतं यक्ष्ये इति (सहस्र) उक्त्वा अन्वाधानाद्याघारान्तं कुर्य्यात्। विवाहादौ तु आघारान्तं पूर्व्वमेव कार्य्यमित्युक्तम्।

सं गोभिरिति मन्त्रस्य अङ्गिरा ऋषिर्बृहस्पतिर्देवता त्रिष्टुप् छन्दः अर्कविवाहाङ्गभूताज्यहोमे विनियोगः।

ॐ सं गोभिराङ्गिरसो नक्षमाणो

भग इवेदर्य्यमणं निनाय।

जने मित्रो न दम्पती अनक्ति

बृहस्पते वाजयाशूँरिवाजौ स्वाहा॥

१०म, ६८सू, २ऋक्।

बृहस्पतय इदं न मम।

यस्मै त्वेत्यस्य वामदेव ऋषिरग्निर्देवता त्रिष्टुप् छन्दः अर्क-विवाहाङ्गभूताज्यहोमे* विनियोगः ।

ॐ यस्मै त्वा काम कामाय वयं सम्राड्यजामहे ।
तमस्मभ्यं कामं दत्त्वायेदं त्वं घृतं पिब स्वाहा ॥

अग्नये इदम् न मम ।

ततो व्याहृतिभिश्चतुष्टयं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् । एवं होमं समाप्य हव्यं प्राशयेत् । पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदाहरेत् ।

मया कृतमिदं कर्म्म स्थावरेषु जरायुणा ।
अर्कापत्यानि मो देहि तत्सर्व्वं क्षन्तुमर्हसि ॥
इत्युक्त्वा शान्तिसूक्तानि† जप्त्वा तं विसृजेत् पुनः ।
गोयुग्मं दक्षिणां दद्यादाचार्य्याय च भक्तितः ॥
तद्वस्त्रप्रतिमादीनि सर्व्वं दद्यात्प्रयत्नतः ।
स्वयं नूतनवस्त्राणि धृत्वा पुण्याहमाचरेत् ॥
इतरेभ्योऽपि विप्रेभ्यो देया तत्र च दक्षिणा ।
ततस्तुष्टो गृहं गत्वा भुञ्जीयाद्बन्धुभिः सह ॥
चतुर्थदिवसादूर्द्ध्वं पञ्चमेऽह्नि ततस्तदा ।
अर्कप्रदेशमेत्याथ पूर्व्ववत् सम्प्रपूज्य च ।

पूर्व्ववत् आकृष्णेनेति मन्त्रेण गन्धादिभिरित्यर्थः ।

विसृज्याग्निं कङ्कणञ्च मानुषीमुद्वहेत्पराम् ॥ इति ।

---

* अर्कविवाहप्रधानाज्यहोमे इति पुस्तकान्तरमाधायां पाठः ।

† आ नो भद्रा इत्यादीनि, प्रथमखण्डस्य ८२४ पृष्ठे द्रष्टव्यानि ।

अनेनाग्निसंरक्षणं पञ्चमदिनपर्यन्तं कर्त्तव्यमिति गम्यते।

अनेन विधिना यस्तु कुर्य्यादर्कविवाहकम्।
पुत्रपौत्रादिसम्पत्तिं चतुर्थो लभते नरः* ॥

इति श्रीविधानपारिजाते श्रीमदनन्तभट्टविरचिते
अर्कविवाहप्रयोगः समाप्तः।

अथ विवाहहोमोत्तरकर्त्तव्यमौपासनहोमविधानमभिधीयते।

तत्राश्वलायनगृह्यम्।

पाणिग्रहणा(दि)दौ गृह्यं परिचरेदिति।

अत्र पाणिग्रहणादिवचनं गृहप्रवेशहोमात् पूर्व्वत्वार्थम्।

तथाच गृह्यपरिशिष्टम्।

अथ नित्यौपासनं तस्य सायमारम्भ इति।

शौनकोऽपि।

यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु।
परिचर्य्या विवाहाग्नेर्विदधीत स्वयं द्विजः॥
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम्॥ इति।

---

* अथ आर्कविवाहे काम्यपर्णोविधो न भवति अोदेकात् इति केचित्। आर्कत्वस्य न दोषायेत्यन्ये। काम्यपर्णोपे पर सवीधविवाहयौविभमाधर्म्यं परिकल्प्य तत्कादर्के प्रति पर्णादात्। आचार्यास्तु मूलेन दर्श विवाह्य काम्यपर्णोत्तरहाने सर्वोत्र कन्याविशेषणत्वेन सहोत्थं वादित्वहरिमर्कस्थाने आपितावहपिलो सत्र च मामानि समेत्य वहोर्द्धितम्। [illegible] पोर्लेत काम्यपर्णास्य आर्कविवाहो निर्गाढी भवतीति बोधीनाथः।

इदमपि नवनाद्यनतिक्रमे द्रष्टव्यम् ।

तथाचापस्तम्बसूत्रभाष्यकृत् सुदर्शनाचार्य्यः ।

तस्य चारम्भणं रात्राविव यदि नवनाडी नातीताः ।

अतीताश्चेत् परेद्युः सायमग्निहोत्रवेलायामारभ्य इति ।

अन्यत्रापि ।

प्रातर्होमे सङ्गवान्तः*कालस्त्वनुदितेऽथवा ।

सायमस्तमिते होमः कालस्तु नवनाडिकाः ॥ इति ।

अथानुदितहोमकालस्तु वाजसनेयिना वेदितव्यः ।

तथाच कात्यायनसूत्रम् ।

औपासनस्य परिचरणमस्तमितानुदितयोरिति ।

तेषामौपासनस्यारम्भोऽपि चतुर्थीहोमानन्तरमाहितेऽग्नौ भवति न तु विवाहाग्नौ । आवसथ्याधानं दारकाले दायाद्यकाले वेति कात्यायनसूत्रात् । तद्भाष्यमपि । दारकालश्चतुर्थीकर्म्मकालः । दायाद्यकालो धनविभागकाल इति । औपासनात् पूर्व्वं यदि विवाहाग्निः शाम्येत तदा प्रायश्चित्तमुक्तं विश्वादर्शे ।

उद्वाहौपासनात् पूर्व्वमनले शान्तिमागते ।

स्थालीपाकं ततः कृत्वा औपासनमथाचरेत् ॥

नवनाडिभ्य ऊर्द्धं चेत् स्थालीपाको भवेत वै ।

औपासनं तदा कुर्य्यात् परेद्युः सायमेव च ॥ इति ।

---

* यस्तु षड्घटिकः कालः पश्चादीपोदयाद्रवेः ।

स होमकालो विज्ञेयो सायाह्न इति स्मृतः । प्रयोगपारिजात ।

तस्य प्रादुष्करणकालं उक्तं आश्वलायनसूत्रे ।

तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्याताविति ।

तत्कारिकायामपि ।

अन्वग्नेरपराह्णेऽग्निमस्तं याते दिवाकरे ।

पर्युक्ष्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् ॥ इति ।

अथ स्पष्टमाह कात्यायनः ।

सूर्य्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः ।

प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ॥ इति ।

तथा ।

दुर्हिणा सुपया वाग्निविहारो* न विरुध्यते ।

नि(लिप)ञ्जनञ्च पात्राणामुपलेपनमेव च ॥ इति ।

उक्तकाले प्रादुष्करणाभावे प्रायश्चित्तमुक्तमाश्वलायनकारिकायाम् ।

प्रायश्चित्तं विशेषेण यत्र नोक्तं भवेद्विधिः ।

होतव्याव्याहृतिस्तत्र भूर्भुवःस्वरितीति च ॥

अनुदितहोमपक्षलक्षणमाह कात्यायनः ।

रात्रेस्तु षोडशे भागे ग्रहनक्षत्रभूषिते ।

कालं त्वनुदितं ज्ञात्वा तत्र होमं प्रकल्पयेत् ॥

तथा ।

यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।

■ च लौहित्यमायाति† तावत्सायन्तु हूयते ॥

---

* विहारो विहरणमुद्धरणमिति यावत् । इति शोधकाः ।

† लौहित्यञ्च नायाति इति सम्प्रदायसिद्धः पाठः, स एव समीचीनतया प्रतिभाति ।

अथ आश्वलायनादीनां होमे मुख्यकालमाह चन्द्रिकायामत्रिः ।

हस्ताद्‌र्द्धं रविर्यावद्दुरं हित्वा न गच्छति ।
तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम् ।
रात्रौ प्रदोषो मुख्यः स्यादिति वेदविदो विदुः ॥ इति ।

अथ गौणकालमाह शौनकः ।

पश्चादस्तमयात्कालो यो भवेत्त्रिमुहूर्त्तकः ।
स सायं होमकालश्च प्रदोषाख्य उदाहृतः ॥
यस्तु प्रभातिकः कालः पश्चादेवोदयाद्रवेः ।
स होमकालो विप्राणां सङ्गवान्त इति स्मृतः* ॥ इति ।

यदि गौणकालोऽप्यतीतः स्यात्तदा प्रायश्चित्तमुक्तं गृह्यपरिशिष्टे ।

नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयात् । द्वादश-
रात्रादूर्द्धं पुनराधानमिति ।

केचित् प्रायश्चित्तं कृत्वा प्रातर्होमात् पूर्व्वं सायं होमः कार्य्यः
सायं होमात् पूर्व्वं प्रातर्होमः कार्य्य इत्याहुः ।

आसायं कर्म्मणः प्रातरप्रातः सायं कर्म्मणः ।
आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात् ॥

इति बौधायनस्मृतेरिति ।

तस्य अग्निहोत्रेणेति सूत्रं प्रपञ्चितं शौनकेन ।

अग्निहोत्रवदित्येतच्छौनकेन प्रपञ्चितम् ।
पुनः पर्य्युक्ष्य चाङ्गारानुदगग्नेरपोह्य च ॥

---

* अत्र [illegible] पूर्व्वं [illegible] पूर्व्वाह्ण इति, [illegible] ।

तस्य प्रादुष्करणकाल उक्त आश्वलायनसूत्रे ।

तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्याताविति ।

तत्कारिकापि ।

प्रज्वलयेदपराह्णेऽग्निमस्तं याते दिवाकरे ।

पर्युक्ष्याग्निं परिस्तीर्य पर्युक्ष्य च ततः परम् ॥ इति ।

अत्र स्पष्टमाह कात्यायनः ।

सूर्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः ।

प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ॥ इति ।

तथा ।

दुहिता लुपया वाग्निविहारो* न विद्यते ।

नि(र्लेप)मेजनस्य पाषाणासुपलेपनमेव च ॥ इति ।

तत्कालेऽपि प्रादुष्करणाभावे प्रायश्चित्तमुक्तमाश्वलायनकारिकायाम् ।

प्रायश्चित्तं विशेषेण यत्र नोक्तं भवेद्विधिः ।

होमव्याहृतिभिस्तत्र भूर्भुवःस्वरितीति च ॥

अनुदितास्तमयलक्षणमाह कात्यायनः ।

रात्रेस्तु षोडशे भागे ग्रहनक्षत्रभूषिते ।

कालं त्वनुदितं ज्ञात्वा तत्र होमं प्रकल्पयेत् ॥

तथा ।

यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।

न च लौहित्यमायाति† तावत्सायन्तु हूयते ॥

---

* विहारो विहरणमुद्धरणमिति यावत् । इति श्रीबोधायन ।

† लौहित्यमथ नायेति इति सत्याषाढमताचार्यपाठः, स एव श्रीबोधायनस्य संमतः ।

अत्र आश्वलायनादीनां होमे मुख्यकालमाह चन्द्रिकायामत्रिः ।

> अस्ताद्दूर्ध्वं रविर्यावद्ध्रुवं हित्वा न गच्छति ।
> तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम् ।
> रात्रौ प्रदोषो मुख्यः स्यादिति वेदविदो विदुः ॥ इति ।

अथ गौणकालमाह शौनकः ।

> पश्चादस्तमयात्कालो यो भवेत्त्रिमुहूर्त्तकः ।
> स सायं होमकालस्य प्रदोषान्त उदाहृतः ॥
> यस्तु पश्चाद्गिमः कालः पश्चादेवोदयाद्रवेः ।
> स होमकालो विप्राणां सङ्गवान्त इति स्मृतः* ॥ इति ।

यदि गौणकालोऽप्यतीतः स्यात्तदा प्रायश्चित्तमुक्तं यज्ञपरिशिष्टे ।

> नित्यहोममतीत्य मनस्त्वा चतुर्गृहीतं जुहुयात् । द्वादश-
> रात्रादूर्ध्वं पुनराधानमिति ।

केचित्तु प्रायश्चित्तं कृत्वा प्रातर्होमात् पूर्व्वं सायं होमः कार्य्यः
सायं होमात् पूर्व्वं प्रातर्होमः कार्य्य इत्याहुः ।

> आसायं कर्म्मणः प्रातरामातः सायं कर्म्मणः ।
> आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात् ॥

इति बौधायनश्रुतेरिति ।

तस्य अग्निहोत्रेणेति सूत्रं प्रपञ्चितं शौनकेन ।

> अग्निहोत्रवदित्येतच्छौनकेन प्रपञ्चितम् ।
> पुनः पर्य्युक्ष्य चाङ्गारानुदगग्नेरपोह्य च ॥

---

* यत्र नित्याग्निहुत सर्व्वमह प्रातराहुते ध्यान सर्व्वा यदि सायमाहुते पूर्वं दर्श दर्शस्य पत्र पूर्वकालस्य यदि, तदाद्यप्रदिमदादिप्रायश्चित्तविधिरिति बोधोनाय ।

होम्यानां द्वादशानान्तु पक्वमेतेष्वधिश्रयेत् ।
पयो यवागूः सर्पिश्च ओदनं दधितण्डुलाः ॥
सोमस्तैलमपो व्रीहिर्द्वादशैते तिला यवाः ।
पय आदीनि चत्वारि विदुः पक्वानि याज्ञिकाः ॥
दध्यादीनामपक्वानामधिश्रयणमिष्यते ।
वस्तुकेन सम्यक्तवेदपक्वं पक्वमेव च ॥
अधिश्रिते स्रुवेणापः परिषिञ्चेद्धवींषि च ।
पुनस्त्रिर्ज्वलता तेन परिस्थूह्य प्रगृह्य तत् ॥
उ(द)दाकर्षेत्सवोदास्याप्यङ्गारानतिसृज्य च ।
अग्नेः प्रश्चात्पृथिव्येव निधाय समिधा सह ।
तेषामेकं संस्कृतञ्च यजेत्वा वायसग्नये ॥
तेषां द्वादशद्रव्याणां मध्ये एकं द्रव्यमित्यर्थः ।
स्वाहेति मन्त्रमुच्चार्य्य कुर्व्वीत प्रथमाहुतिम् ।
प्रातर्होमे तु सूर्याय स्वाहेति प्रथमाहुतिम् ।
तूष्णीं प्रजापतिं ध्यायेदुभयत्र द्वितीयकम् ॥ इति ।
अथान्यो विशेषः स्वस्वशाखातोऽवगन्तव्यः ।
होमस्थानं स्मृत्यर्थसारे ।

बहुशुष्केन्धनेनाग्नौ सुसमिद्धे हुताशने ।
अङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥
योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ।
अग्निः प्रदक्षिणावर्त्तः कर्मदश्च शुभावहः ॥ इति ।

अग्न्युपस्थापनमन्त्रानाह शौनकः ।

परिसमुह्य पर्य्युक्षाप्युपतिष्ठेद्विभुजम् ।

अग्नेः सूक्तैश्च* सौरैश्च† प्राजापत्यैश्च नित्यशः ॥

याज्ञवल्क्योऽपि ।

हुत्वाग्निं सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।

एतद्धोमप्रशंसामाहाङ्गिराः ।

प्रदद्यात्काञ्चनं मेरुं पृथिवीं (च) वा ससागराम् ।

तत् सायं प्रातर्होमस्य तुल्यं भवति वा न वा ॥ इति ।

अन्यत्रापि ।

नाग्निहोत्रात्परो धर्म्मो नाग्निहोत्रात्परं तपः ।

नाग्निहोत्रात्परं (ज्ञा)दानं नाग्निहोत्रात्परा गतिः ॥

तथा ।

आद्या व्याहृतयस्तिस्रः स्वधा स्वाहा नमो वषट् ।

यस्यैते वेश्मनि सदा ब्रह्म(लोकः)भूतः स एव तु ॥

प्रकरणे प्रत्यवायमाह गर्गः ।

कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।

तिष्ठेत चेद्द्विजो व्रात्यस्तथाच पतितो भवेत् ॥

यथा स्नानं यथा सन्ध्या वेदस्याध्ययनं यथा ।

तथैवोपासनं कार्य्यं न स्थितिस्तद्वियोगतः ॥

यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते ।

* उदुत्यमित्यादिकैः, प्रथमखण्डस्य १९६ पृष्ठे प्रदर्शितैः ।

† उदुर्याम्नित्यादिकैः, प्रथमखण्डस्य ३०७ पृष्ठे प्रदर्शितैः ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥
यत्र नाश्नन्ति वै देवाः पितरोऽतिथयस्तथा ।
वृथापाकः स विज्ञेयो न तस्याश्नीत कश्चन ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति* ॥ इति ।

इति नित्यहोमविधानम् ।

## अथ सूतकादौ होमविधानम् ।

तत्र कात्यायनः ।

सूतके मृतके प्राप्ते नित्यकर्म न सन्त्यजेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

चरुं स्थालीपाकं, होमं नित्यहोमम् ।

शौनकोऽपि ।

स्मार्त्ताग्निं सूतके प्राप्ते स्वयं न जुहुयाद्द्विजः ।
श्रौताग्निन्तु स्वयं हुत्वा समासे वा स्वयं हुनेत् ॥
स्मार्त्ताग्निमात्मनोऽन्येषामभावे सूतकादिषु ।
समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम् ॥

---

* अत्र प्रतिप्रसवमाह स एव ।
पितृपाकोपजीवी च मातृपाकोपजीविकः ।
अनाश्रयकर्मिको वा न दुष्येतार्थिना द्विजा ॥

अतीताहुतयः सर्व्वा हुनेत्स्विष्कृतिपूर्व्विकाः ।
घृतैश्चतुर्गृहीतैस्तु कार्य्या तत्स्विष्कृतिः सदा ॥
अतीते द्वादशाहे तु पूर्णाहुत्यष्टकं हुनेत् ।
प्राङ्ना(मा)नाय ततो हुत्वा गार्ह्योऽप्यग्निर्विनश्यति ॥

आयस्तम्बोऽपि स एवाह ।

आयत्येवागते होमानतिक्रामेदहन्नपि ।
आज्यं चतुर्गृहीत्वैतत् स्रुवेण प्रकृतस्रुचि ॥
तदा कृत्वाज्यसंस्कारं यथोक्तविधिना ततः ।
आज्यं चतुर्गृहीत्वैतत् स्रुवेण प्रकृतस्रुचि ॥
उक्त्वा मन्त्रं मनो ज्योतिर्जुषतामिति* पूर्व्वकम् ।
हुत्वा सकृदतीताय होमान् कृत्वा यथाक्रमम् ॥
पश्चात् स्वकालहोमस्य विदधीत यथा पुरा ।
प्रायश्चित्तमिदं केचित् प्रतिहोमव्यतिक्रमे ॥  इति ।

आहुरिति शेषः ।

चन्द्रिकायामपि ।

कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि ततश्चरेत् ॥
यस्त्वतीतान्यतिक्रम्य उत्तराणि समाचरेत् ।
न देवाश्चैव च पितृंस्तस्योपतिष्ठते ॥  इति ।

अथैतिकर्त्तव्यतामाह स एव ।

---

* मनो ज्योतिर्जुषतामाज्यस्य वृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञं समिमं दधातु विश्वेदेवास इह मादयन्तामों प्रतिष्ठ ॥

पृथक् पृथगतीतासु होतव्या हुतयोऽखिलाः ।
नित्याग्निहोत्रवहुत्वा परिस्तीर्य्य प्रति प्रति ॥　इति ।

अन्यत्रापि ।

प्रतिहोममभिव्याप्त्य कुर्य्यात् परिसमूहनम् ।
पर्य्युक्षण चेत्युक्तोऽयमौपासनविधिक्रमः ॥
इति स्मृतिकादौ होमविधाननिर्णयः ।

अथापदस्य कालद्वयेऽपि होमाशक्तौ प्रजापतिराह ।

सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।
आपन्नो जुहुयात्तत्र समिदेकाथवा द्वयम् ॥
सायंहोमस्य मुख्यत्वात्तदीयं तत्रमिष्यते ।
आनन्द आहुती कुर्य्यात्तत्र द्वे सायमाहुती ॥
द्वे प्रातराहुती सायं होमे चैका समिद्यदि ।
समित् हुता द्वितीया चेत् सा भवेत्प्रातराहुती ॥
द्विः सायं होमवत्कुर्य्याद्विः प्रातर्होमवत् सु(च)वम् ।
उपस्थानं सकृत्कार्य्यं शेषं प्रकृतिवद्भवेत् ॥

अत्र स्रुवग्रहणमाज्यहोमादिविषयम् ।

तथा ।

केचिद्द्वे आहुती हुत्वा मंवे(वि)शैव निमील्य (च) वा ।
विच्छिद्यैवं तु तौ होमौ कुर्य्युर्द्वे आहुती ततः ॥
गुर्व्वापदि समस्यन्ते प्रातः सर्व्वे कदाचन ।
यावन्तोऽत्र समस्यन्ते सर्व्वे सायमुपक्रमाः ।
प्रातःकालापवर्गाश्च न तु प्रातरुपक्रमाः ॥　इति ।

आश्वलायनगृह्यपरिशिष्टेऽपि ।

> सायंप्रातर्होमौ सायं वा समस्येत [illegible] प्रातरिति ।

अत्रापि विशेषः स्मृतिभास्करे ।

> सन्ध्योपस्थानाह्ने सायं होमः पृथग्भवेत् ।
> तथैव यजनीयेऽह्नि प्रातर्होमो भवेत् पृथक् ॥

इति होमसमासविधानम् ।

## अथ पक्षहोमविधानम् ।

तत्र वैद्यनाथः ।

> एकेऽभ्युदितहोमाः स्युरन्येऽनुदितहोमिनः ।
> अन्ये तु दिनहोमाश्च पक्षहोमास्तथापरे ॥
> प्रवासी चाग्निहोत्री (च) यजीन् पक्षाश्चांश सप्त वा ।
> दातव्यो होम एकाहे सायम्प्रातः पृथक् पृथक् ॥ इति ।

अनेन यावत्कालं प्रवासस्तावद्धोमोऽभ्यनुज्ञायते । न तु पक्षहोम-नियमः ।

मरीचिरपि ।

> शरीरापद्भवेद्यत्र भयात्सैव प्रजायते ।
> तथान्यास्वपि चापत्सु पक्षहोमो विधीयते ॥
> पक्षहोमं तथा हुत्वा मध्ये तस्माद्विवर्त्तितः* ।
> होमं पुनः प्रकुर्य्याच्चेत्तदा दोषो न विद्यते ॥

---

* हुतेषु पक्षहोमेषु मध्ये तस्माद्विवर्त्तते ।
होमं पुनः प्रकुर्य्याच्चेत् पापी दोषभाग्भवेत् ॥ इति संस्काररत्नमालायां पाठः ।

पृथक् पृथगतीतासु होतव्या हुतयोऽखिलाः ।
नित्याग्निहोत्रवद्धुत्वा परिस्तीर्य्य प्रति प्रति ॥　इति ।

अन्यत्रापि ।

प्रतिहोममविस्मृत्य कुर्य्यात् परिसमूहनम् ।
पर्य्युक्षणं चेत्युक्तोऽयमौपासनविधिक्रमः ॥

इति सूतकादौ होमविधाननिर्णयः ।

अथायनस्य कालद्वयेऽपि होमागतौ प्रजापतिराह ।

सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।
आयम्ते जुहुयात्तत्र समिदेकाथवा द्वयम् ॥
सायंहोमस्य मुख्यकालातीतं तन्त्रमिष्यते ।
अतस्त आहुती कुर्य्यात्तत्र द्वे सायमाहुती ॥
द्वे प्रातराहुती सायं होमे चैका समिद्यदि ।
समित् कृता द्वितीया चेत् सा भवेत्प्रातराहुतौ ॥
द्विः सायं होमवत्मुख्याद्विः प्रातर्होमवत् स्रु(च)वम् ।
उपस्थानं सकृत्कार्य्यं शेषं प्रकृतिवद्भवेत् ॥

अत्र स्रुवग्रहणमाज्यहोमादिविषयम् ।

तथा ।

केचिद्वे आहुती हुत्वा संवे(वि)श्यैव निमील्य (च) वा ।
विच्छिद्यैवं तु तौ होमौ कुर्य्युर्द्वे आहुती ततः ॥
शुर्व्वापदि समस्यन्ते प्रातः सर्व्वे कदाचन ।
यावन्तोऽत्र समस्यन्ते सर्व्वे सायमुपक्रमाः ।
प्रातःकालापवर्गाय न तु प्रातरुपक्रमाः ॥　इति ।

उदयेऽस्तमये वापि दम्पती चेद्विनिर्गतौ ।
आरूढो वा धृतो वाग्निर्लौकिकः स्यात्तदैव हि ॥
प्रोषिते तु प्रिये पत्नी यदि ग्रामान्तरं व्रजेत् ।
होमकाले यदि प्राप्ता न सा दोषेण युज्यते ॥

कात्यायनस्तु ।

अन्तरायतुगते यत्र होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते ॥

अथ सभार्य्यस्य चिरकालप्रवासकरणमस्ति चेत्तदा अरण्योरात्मनि समिधि वा अग्निं समारोप्य गच्छेत् ।

तथाच शौनकः ।

अथ प्रवासाद्यापत्सु समारोपणमुच्यते ।
अरण्यात्मसमित्स्वेव गृह्यस्याग्नेर्यथाविधि ॥
अग्नौ प्रज्वलिते गृह्ये प्रतपेदरणीद्वयम् ।
अश्वत्थं समिधं वापि अयं ते योनिरित्यृचा* ॥
या ते अग्ने यज्ञियेति आत्मन्यारोपयेत वा ।
आपद्येवं समारोप्य ततः प्रत्यवरोहयेत् ॥
अथारण्यो. समारूढमरणीभ्यां मथेत् पुनः ।
प्रत्यवरोहेत्यनयाथात्मारूढं ततः श्वसन् ॥
आत्मारूढाग्निमादध्याल्लौकिकाग्नावृचानया ।
समिदारूढमग्निञ्च लौकिकाग्नावृचानया ॥
समिधं तां समाधाय काले होमं समाचरेत् ।

---

* ८१ पृष्ठे द्रष्टव्यम् ।

तस्येतिकर्त्तव्यतामाह आचार्य्यः ।

> हुत्वा सायम्प्रतिपदि चतुर्द्दश चतुर्द्दश ।
> पृथग्गृहीत्वा मन्त्राभ्यां द्विराहृत्य पृथग्जुहेत् ॥
> द्वितीयायां तथा प्रातर्होमान्तेऽभ्यर्च्य पावकम् ।
> पक्षहोमं चरेदेवमग्निमानपि चापदि ॥ इति ।

अस्यार्थः । घोरापत्प्राप्तौ पक्षहोमं कुर्य्यात् । तद्यथा शुक्ले कृष्णे वा प्रतिपदि स्थालीपाकं कृत्वा सायङ्काले पर्य्युक्षणादिसमित्-प्रक्षेपान्तं सङ्कल्प्य आहुतिप्रमाणं होम्यद्रव्यं चतुर्दशकृत्वः पृथक् पात्रयोर्गृहीत्वा अग्नये स्वाहेति प्रथमगृहीतं सर्व्वं हुत्वा प्रजापतये स्वाहेति द्वितीयगृहीतं सर्व्वं हुत्वा पर्य्युक्षणाद्युपस्थानान्तमङ्गजातं सर्व्वं कुर्य्यात् । एवमेव द्वितीयायां प्रातरपि । अथामावास्यायां पौर्णमास्यां वा श्रोत्रियागारादग्निमाहृत्य भूमिसंस्कारपूर्व्वकं कुण्डे निधाय घोरापदनुवृत्तौ पूर्व्ववत् स्थालीपाकं कृत्वा पूर्व्ववत् पक्षहोमं कुर्य्यात् । एवं सततं पक्षत्रयं पक्षहोमे कृते सति पुनराधानं कार्य्यम् । पक्षत्रये पुनराधेयमादधीत इत्यापस्तम्बस्मरणात् ।

स्मृत्यर्थसारे तु यावदापत्तावत्पक्षहोमः कार्य्य इत्युक्तम् ।

> एवमापद्गतः पक्षे पक्षे चैवं समाचरेत् ।
> आपन्नेदनुपर्व्वेत दीर्घकालं कथञ्चन ॥
> यावज्जीवमविच्छि(च्छे)दात् पक्षहो(मं)मान् समाचरेत् ।
> आपदेवावधिस्तत्र न पक्षगणनावधिः ॥ इति ।

अथ सोमग्रहणे होममाह शौनकः ।

उदयेऽस्तमये वापि दम्पती चेद्विनिर्गतौ ।
आरूढो वा हुतो वाग्निर्लौकिकः स्यात्तदैव हि ॥
प्रोषिते तु प्रिये पत्नी यदि ग्रामान्तरं व्रजेत् ।
होमकाले यदि प्राप्ता न सा दोषेण युज्यते ॥

कात्यायनस्तु ।

अन्वाधानुगते यत्र होमकालद्वयं व्रजेत् ।
उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते ॥

अथ सभार्य्यस्य चिरकालप्रवासकारणमस्ति चेत्तदा अरण्योरात्मनि समिधि वा अग्निं समारोप्य गच्छेत् ।

तथाच शौनकः ।

अथ प्रयाणाद्यापत्सु समारोपणमुच्यते ।
अरण्यात्मसमित्स्वेव गृह्यस्याग्नेर्यथाविधि ॥
अग्नौ प्रज्वलिते गृह्ये प्रतपेदरणीद्वयम् ।
अश्वत्थं समिधं वापि अयं ते योनिरित्यृचा* ॥
या ते अग्ने यज्ञियेति आत्मन्यारोपयेत वा ।
आपद्येवं समारोप्य ततः प्रत्यवरोहयेत् ॥
अथारण्योः समारूढमरणीभ्यां मथेत् पुनः ।
प्रत्यवरोहेत्यनयाचात्मारूढं ततः श्वसन् ॥
आत्मारूढाग्निमादध्याल्लौकिकाग्न्याहृचानया ।
समिदारूढमग्निञ्च लौकिकाग्न्याहृधानया ॥
समिधं तां समाधाय काले होमं समाचरेत् ।

---

* ८५ पृष्ठे दर्शितमन्त्रावेता ।